यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ॥ ४३
पुरोहित उवाच ।
पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेषु च सदा किं त्वं हसति वीक्ष्य माम् ॥ ४४
सव्रीडं वै भवति हि मनो मे हसता त्वया ।
कामया शापितो राजन्नान्यथा वक्तुमर्हसि ॥ ४५
भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ॥ ४६
राजोवाच ।
एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ॥ ४७
पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ॥ ४८
शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः ।
ऋषिरुग्रतपास्त्वं च तदाभूर्द्विजसत्तम ॥ ४९
प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ।
बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ॥ ५०
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ।
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ।

C. 13 489
B. 13 10 57
K. 13 31 56
M. 13 14 57

---

G2 सविदे, B5 मा वदे, M1 2 सवदे D2 8 अजान श्रेत्कथ वदे (D2 °देद्)

44 D1-3 7 पुरोधा (for पुरोहित) —a) D1.2 T2 M4 पुण्याहवचने —b) D1 कर्मकार्येषु, D2 8 कर्मकालेषु, D1-3 धर्मकार्येषु, G2 पुण्यकृत्येषु (for धर्म°) D3 6 वा (for च) —c) B5 T2 3 G M1 2 4 तदा (for सदा) —d) T G1-3 M किं तद्, G4 किंस्विद् (for किं त्व) D1-3 उद्धमसि (for त्व हससि) D1 मा (for माम्)

45 a) T1 पीडित, T2 3 G M व्रीळित (for सव्रीडं) Dn3 हि, D1 4-6 S मे (for वै) Dn3 वै (for हि) D2 8 मनो मम हि सव्रीड, D7 सव्रीड हि मे भवति —b) D1 T1 G2 4 M वै (for मे) D2-9 मनो वै (D2 8 जायते) हसति त्वयि —c) G1 partly damaged B1 D1-3 काम्यया, D10 S स मया (for कामया) T1 चोदितो (for शापितो) D10 स मया श्रावितो राजन्

46 a) B2 damaged V1 B1.3-5 Dn D10 सुव्यक्तं कारण ह्यत्र —b) D2 तं (for ते) —d) D5 सत्येन (for तत्त्वेन) D1 M वै (for मे)

47 a) T1 G4 उक्तस् —b) G1 partly damaged. D1.6 7 9 यदवाच्य, T2 3 G2 यदवोचं (for °वाच्य) D1 om. भवेदपि and 47c D2 8 इह (for अपि)

48 a) T1 पूर्वमेव (for देहे) —b) T1.2 G निबोध द्विजसत्तम —T3 om (hapl.) 48c–49d —c) D2 पूर्वम् (for ब्रह्मन्) —D1 om. (hapl ) 48d–50a —d) G1 partly damaged. D2 शृणुष्व मे (hypermetric) (for मे शृणु) T1 अवधानामिम शृणु

49 D1 T3 om. 49 (cf. v 1 48) B2 G1 partly damaged. —a) D1 अभवत् (for अभव) —b) B1 4 5 D10 तापसे (for °सो) V1 B1 3 5 Dn3 D5 7 -सयत T1 M तापसे धृत(T1 दृढ)निश्चय, T2 G1.3 तापसे (G3 तपसे) कृतनिश्चय, G2 4 तापसे तत्र निश्चय (G2 °य) —c) B3 तपस्वी (for -तपास्त्व) T2 G तु (for च) —d) B3 यदा, G1 3 4 तथा (for तदा) V1 B3 D7 8 G2 M4 [अ]भूद्, G1 3 [अ]हं (for [अ]भूर्) B1 2 5 Dn3 G4 द्विजसत्तम

50 D1 om 50a (cf. v 1 48) —a) D6 प्रीयता, T1 प्रार्थितो, G4 सुप्रीतो (for प्रीयता) D2 6 7 9 सदा, D5 मया, T3 G2 तथा (for तदा) D2 प्रीयता हि तदाजेन —b) B5 D5 T1 मया, D2 त्वया (for मम) D8 -बुद्धिमान् (for °ना) —B1 om. 50cd —c) D8 T2 G ब्रह्मन् (for पूर्वम्) D2 3 पितृकार्येषु य (D8 व) पूर्वम् —d) S मम (for ऽनघ) —e) V1 B1 3 5 Dn3 बृष्या, Dn1 दृष्या, D10 बृस्या; M1-3 बृसा (for बृस्या) G2 4 दर्भे च (for दर्भेषु) D5 हव्येषु (for हव्ये च) B3 D1 6-8 बृष्यां (D7 8 °श्या) दर्भेषु हव्येषु, D2 3 9 T1 बृश्यां (D3 °ष्या, T1 °स्या) हव्येषु दर्भे(T1 °र्ते)षु, T2 3 G1.3 ब्रस्या दर्भे च हव्ये च —f) G1 damaged. D2-9 कव्येषु (for कव्ये च) T2 G3 4 द्विज (for मुनि) B2 3 5 -पुंगव (for -सत्तम) T1 दर्भेषु द्विजसत्तम

51 b) D10 om. from त्वमजायथा up to प्रहसे (in 52b) D8 9 त्वमजायिया, G1 3 समजायथा (for त्वम°) —c) D2 3 च राजा (by transp), D4-9 हि राजा —e) T1 मत्कृतेन हि (hypermetric), M4 °तेपि, Madras ed. त्वत्कृतेन (for मत्कृते हि) D4 [उ]पदेशस्य,

58 56 57

मत्कृते ह्युपदेशेन त्वया प्राप्तमिदं फलम् ॥ ५१
एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवन्ब्रह्मन्प्रहसामि गुरुर्भवान् ॥ ५२
विपर्ययेण मे मन्युस्तेन संतप्यते मनः ।
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ॥ ५३
एवं तवोग्रं हि तप उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ ५४
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ ५५

भीष्म उवाच ।

ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः ॥ ५६
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमः ।
तीर्थानि चाभिगत्वा वै दानानि विविधानि च ॥ ५७
दत्त्वा गाश्चैव विप्राणां पूतात्मा सोऽभवद्द्विजः ।
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ ५८
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
संमतश्चाभवत्तेषामाश्रमेऽऽश्रमवासिनाम् ॥ ५९

---

D8-9 °शश्च ( for °शेन ) V1 B Dn D5 मत्कृतस्योपदेशस्य, D2 8 T2 8 G मत्कृतेनोपदेशेन —$^{f}$) B1 damaged V1 B3-5 Dn8 D2 T1 G3 M [अ]वाप्तम्; B1 Dn1 च्याप्तम् ( for प्राप्तम् ) Dn2 त्वया चाप्तमिदं कुल

52 D10 om up to प्रहसे ( in $52^{b}$ ) ( cf v l 51 ) B2 G1 partly damaged —$^{a}$) D8 राजन् ( for ब्रह्मन् ) — D1 om ( hapl ) $52^{bc}$ —$^{b}$) D9 5 T1 वि(D5 प्र)हस्यामि, D4 6-9 आहस त्वा, G1 प्रहस्ये त्वा ( for °से त्वां ) —$^{c}$) D4 6-8 G1 M त्वा ( for त्वां ) D1 8 9 S परिभवाद् ( for °वन् ) D3 न चापरिभवब्रह्मन् —$^{d}$) T1 न वदामि, G1 प्रहस्यामि ( for °सामि ) D8 प्रहसे त्वा द्विजोत्तम

53 D1 om $53^{c}$–$54^{b}$ T1 om $53^{ab}$ —$^{a}$) Some MSS विपर्ययेन, D7 विपर्ययेण D1-7 9 मन्युस्ते ( for मे मन्युस् ) —$^{b}$) G1 8 M स्मयति मे ( for संतप्यते ) D1-9 येनास्मयत मे मन , T2 8 G2 4 तेन स्मयति मे मति —$^{c}$) D1-9 विप्र, S ब्रह्मन् ( for तुभ्यम् ) —$^{d}$) D1-9 S ततस् ( for अतस् ) D5 7 [अ]ह ( for वै )

54 D1 om $54^{ab}$ ( cf v l 53 ) —$^{a}$) S एव तपो गृहीत व ( T2 तद्, G2 4 था ) — D1 partly damaged for $54^{cd}$ —$^{d}$) G3 यत स ( for यतस्व ) B1 M1-3 ह्यपुनर्भवे, T1 8 G2 M4 न पुन° ( for त्व पुन° )

55 B2 damaged —$^{a}$) D3 8 योनिम् ( for अन्या ) —$^{b}$) T3 G1, 3 4 त्व ( for मा ) D1-9 प्राप्स्यसि D2 8 अन्या प्राप्स्यसि ब्राह्मण —$^{c}$) D2-4 6-9 भूरि ( for विप्र ) —$^{d}$) B1 T2 भूतात्मा ( for पू° ) D2 8 सुव्रत ( for सत्तम ) — After 55, D1 2 7 9 read $64^{ab}$ for the first time, repeating it in its proper place

56 G1 om ( ? hapl ) $56^{a}$–$57^{b}$ ( with the ref ) Dn om 56 ( retaining the ref ) D1 3 4 6 7 9 om $56^{ab}$ ( D1 7 9 om also the ref. ) After the ref., D3-6 read $64^{ab}$ for the first time, repeating it in its proper place —$^{a}$) G3 4 M1 निसृष्टो ( for वि° ) D2 ततो राज्ञा तु विसृष्टो —$^{b}$) V1 दानम्, S ( except T1, G1 om ) धान्यानि ( for दानानि ) — After $56^{ab}$, D8 reads $64^{ab}$ repeating it in its proper place. —$^{d}$) T1 ग्रामान्भूमिं ( by transp ) D1 2 4-7 9 स द्विज , M धर्मत ( for सर्वश ) D8 भूरि ग्रामाश्च स द्विज

57 G1 om $57^{ab}$ ( cf v l. 56 ) —$^{a}$) B5 तीर्त्वा ( for चीर्त्वा ) D4-6 व्रतानि कृत्वा कृच्छ्राणि, S ( G1 om ) कृच्छ्राणि कृत्वा च तथा ( T2 8 G3 °दा ) —$^{b}$) T1 कल्पोक्तं वै, G1 तथोक्तानि V1 B Dn D10 द्विजोत्तमै , D1 4 8 9 G2-4 M2 °त्तम —$^{c}$) V1 B Dn D8, 10 T2 8 G [अ]पि ( for [अ]भि ) D8 स ( for वै ) D4 corrupt., D5 6 तीर्थानि गत्वा विप्र स ( D6 स विप्रो ) —$^{d}$) D2 वै ( for च )

58 B2 partly damaged —$^{a}$) V1 B ( B2 damaged ) Dn D7 विप्रेभ्य , D10 सर्वेभ्य ( for विप्राणा ) —$^{b}$) D3 तदा ( for द्विज ) —$^{c}$) V1 न चैव ( for तमेव ) D7 वा ( for च ) —$^{d}$) D2 तत ( for तप )

59 $^{a}$) G1 damaged T G3 4 तप- ( for तत ) —$^{c}$) T G सत्तमश् ( for संमतश् ) —$^{d}$) D5 8 सोश्रमे ( for आ° ) V1 B Dn D10 आश्रमे तन्निवासिना, D2-4 6 आ( D4 6 सो )श्रमाश्रम°

60 $^{c}$) B5 न च वक्तव्यमिह हि —$^{d}$) B5 किंचिद् ( for तस्माद् ) V1 जना.

एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ ६०
वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ॥ ६१
एषितव्यं सदा वाचा नृपेण द्विजसत्तमात् ।
न प्रवक्तव्यमिह हि किंचिद्वर्णावरे जने ॥ ६२
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ॥ ६३
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किंचिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥ ६४
तस्मान्मौनानि मुनयो दीक्षां कुर्वन्ति चादृताः ।
दुरुक्तस्य भयाद्राजन्नानुभाषन्ति किंचन ॥ ६५
धार्मिका गुणसंपन्नाः सत्यार्जवपरायणाः ।
दुरुक्तवाचाभिहताः प्राप्नुवन्तीह दुष्कृतम् ॥ ६६
उपदेशो न कर्तव्यः कदाचिदपि कस्यचित् ।
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ॥ ६७
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति वै ॥ ६८
वक्तव्यमिह पृष्टेन विनिश्चित्य विपर्ययम् ।
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ ६९
एतत्ते सर्वमाख्यातमुपदेशे कृते सति ।
महान्क्लेशो हि भवति तस्मान्नोपदिशेत्कचित् ॥ ७०

C. 13 506
B. 13 10 74
K. 13 31 75
M. 13 14 76

इति श्रीमहाभारते अनुशासनपर्वणि दशमोऽध्यायः ॥ १० ॥

---

61 B5 Dn1 n2 T3 om. (hapl.) 61-62 —$^{a}$) D1-3 °देशयेद्, M1 वर्ग (for वर्जं) —$^{b}$) V1 om., B2 damaged, D1-3 ब्राह्मण B2 द्विज (for नृप) —$^{d}$) M1 2 तत (for द्विज)

62 B5 Dn1 n2 T3 om. 62 (cf. v. l. 61) T1 om. 62$^{ab}$ —$^{a}$) V1 B1 2 D2 10 G2 नैषितव्य (D10 G2 °व्य), Dn3 T2 G1. 3 4 M नेषि° (for एषि°) B4 नैषितव्यं नराचारा —$^{b}$) V1 B (B5 om.) Dn2 D2. 10 S (T1 3 om.) द्विजेन नृपसत्तम —$^{c}$) D4 om. न V1 B1-4 च (for प्र) S (T3 om.) न च प्रव क्तव्यमिह —$^{d}$) G2 वर्गांवरे (for वर्णावरे) T1 G1 नरे (for जने)

63 B4 om. 63 —$^{a}$) D1-9 ब्राह्मण क्षत्रियो वैश्यस् —$^{b}$) D8 द्विजोत्तमा (for द्विजातयः) —$^{d}$) G2 प्रदुष्यति, G4 प्रदू°, M प्रदुष्यते

64 D1. 2 7 9 read 64$^{ab}$ after 55, D3-6 after the ref. in 56, and D3 after 56$^{ab}$, repeating it here —$^{d}$) D2 4-9 दुर्विज्ञेया (for दुर्ज्ञेया हि)

65 $^{a}$) V1 B1. 2 4 Dn D1-3 5 T1 G1 3 मौनेन (for मौनानि) T3 G1 3. 4 ऋषयो (for मुनयो) —$^{b}$) B1 दिक्षा (for दीक्षां) D5 वा (for च) B4 [आ]मृता, S [अ]नृते (for [आ]दृता) —$^{d}$) T2 3 G M [अ]भि- (for [आ]नु) V1 B Dn D10 नाभाषन्ते च (V1 हि) किंचन, T1 नाभिभाषत कर्हिचित्

66 $^{b}$) V1 B Dn D10 समन्विता, T G -गुणान्विता, M -दमान्विता (for -परायणा) —$^{c}$) G1 partly damaged V1 D5 T2 वाचाभिहिता, B1-2 5 °हिते, B4 -वागभिहता, Dn -वाचाभिहिते, D10 °हते (for °हता) —$^{d}$) D5 7 9 दुष्कृतं, S किल्बिष (for दुष्कृतम्)

67 $^{b}$) V1 अस्य (for अपि) S ह्यज्ञात्वा यस्यकस्यचित् —$^{c}$) D4-6 यत् (for तत्) D7 9 पात्र (for पाप) —$^{d}$) D1. 2 4 6 7 8 ब्राह्मण समवाप्तवान्

68 $^{a}$) V1 B D1 2 विमृश्य —$^{b}$) D7 कर्तव्य (for वक्तव्य) — G1 damaged for 68$^{cd}$ —$^{c}$) D4-6 8-10 सत्यावृतेन, T1 अविमर्शेन (for सत्यानृतेन) M3 नि- (for हि) —$^{d}$) V1 B Dn D10 हि (for वै)

69 T1 om. 69$^{ab}$ —$^{a}$) B1 3 4 D10 S (T1 om.) अथ (for इह) D1-9 न वक्तव्यमपृष्टेन —$^{b}$) V1 B Dn D10 विनिश्चय (for विपर्ययम्) —$^{c}$) T1 M1. 2 सतो (T1 °स्तो) पदेशः कर्तव्यो

70 $^{a}$) T1 यदेतत् (for एतत्ते) —$^{b}$) D1 6-8 G2 उपदेश (for °देशे) V1 B2 4 Dn3 D10 उपदेशकृतो

# ११

युधिष्ठिर उवाच ।

कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।

अत्र ते वर्तयिष्यामि यथादृष्टं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसंनिधौ पर्यपृच्छत ॥ २

नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्त्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्य ॥ ३

कानीह भूतान्युपसेवसे त्वं
संतिष्ठती कानि न सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ४

एवं तदा श्रीरभिभाष्यमाणा
देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५

वसामि सत्ये सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
नाकर्मशीले पुरुषे वसामि
न नास्तिके सांकरिके कृतघ्ने ।

---

यथा ( V1 B2 [ marg ] मया ); B1 3 5 Dn1 n2 °शकृते मया ( B1 5 यथा ) —[d]) V1 Dn इह ( for कच्चित् )

Colophon — *Parvan name* B1–4 Dn3 D3 8 शान्ति — *Sub-parvan* V1 B Dn1. n2 D1–8 10 M दानधर्म — *Adhy name* V1 B2 ( marg ) 5 Dn शूद्रमुनिसंवाद , B3 D4–9 दुरुपदिष्ट , B4 वर्णावरोपदेश , D1–3 उप ( D3 °पा )दिष्ट , D9 ( addl ) अधर्मोपदेशदूषणं , D10 दुरुक्त , T2 हीनजात्युपदेशप्रतिषेधे ब्राह्मणशूद्रसंवाद — *Adhy no* ( figures, words or both ) V1 D5 10 10 ( as in text ), B2 9 , S 32 — *Śloka no* Dn1 74

## 11

1 G2 om the ref. —[a]) D7 जात ( for तात ) —[b]) T1 M1–3 पुरुषर्षभ ( for भरत° ) D8 स्त्रीषु भावेषु भारत —[d]) G1 partly damaged D1 6 त ( for तन् )

2 [a]) V1 B Dn2 D2 3 5 10 T1 G2 वर्णयिष्यामि ; D4 6–9 कथ° ( for वर्त° ) —[b]) V1 B Dn D10 T2 3 G यथावृत्त ( for यथादृष्टं ) —[c]) M1 3 4 -पुत्रं ( for -पुत्र ) —[d]) D4–9 -संनिधौ भरतर्षभ

3 [a]) D6 7 9 [अं]गरतां ( for [अ]ङ्कगतां ) —[b]) B2 Dn1 n2 G समानवर्णां ; B3 दलायताक्षीं —[c]) G1 partly damaged D1 3 -वक्त्रा , D10 M4 नेत्रा , T1 -नेत्रीं ( for नेत्रा )

4 Before 4, B4 ins. रुक्मिण्युवाच T1 reads 4[a] twice —[a]) T1 ( second time ) च ( for [उ]प ) — T1 G2 om ( hapl ) 4[b] —[b]) V1 B Dn D3 10 T2 3 G1 3 M2 संतिष्ठसे ( D3 10 °ते ) ( for °ती ) V1 B1 3 5 Dn1 n2 T2 3 G1 3 4 च ( for न ) B D1 4–10 M च ( for त्वम् ) —[c]) D4–6 T2 3 G कानि ( for तानि ) T1 G M1 4 त्रिलोकेश्वरि ( for °श्वर- ) D10 -भूरि , G4 -भूति ( for -भूत ) —[d]) G1 partly damaged. D1 [अ]पि ( for मे ) D10 पयोधि ( for महर्षि ) Dn1. n2 -कल्पे ( for -कन्ये )

5 [a]) Dn1 -भाच्यमाणा , D2 10 G1 2 -भाष° ( for भाष्य° ) —[b]) S मात्रा ( T1 °तु ) समक्षं ( G2 °हस्त ) मकरध्वजस्य —[c]) T1 रुचिराभिधानं ( for मधुरा° ) —[d]) B5 मनोभव , G1 3 °मुख , G2 4 °रम ( for °हरं ) Dn2 चद्रमुखि ( for °मुखी ) Dn3 प्रपन्ना , D1. 2 6 प्रतीता ( for प्रसन्ना ) D3–5 7–9 मनोहरं चन्द्रमुखीं ( D4 °खां ) प्रतीता ( D3 °तां )

6 Before 6, V1 B Dn D5 10 ins श्रीरुवाच —[a]) G4 वदामि ( for वसामि ) V1 B2 3 5 Dn D1–9 T3 नित्य ; G सत्त्वे ( for सत्ये ) D6 सुभग ( for °गे ) —[b]) G1 partly damaged T1 रक्षां वरे ( for दक्षे

न भिन्नवृत्ते न नृशंसवृत्ते
न चापि चौरे न गुरुष्वसूये ॥ ६
ये चाल्पतेजोबलसत्त्वसारा
हृष्यन्ति कुप्यन्ति च यत्र तत्र ।
न देवि तिष्ठामि तथाविधेषु
नरेषु संसुप्तमनोरथेषु ॥ ७
यश्चात्मनि प्रार्थयते न किंचि-
द्यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषपरेषु नित्यं
नरेषु नाहं निवसामि देवि ॥ ८
वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ॥ ९
स्त्रीषु क्षान्तासु दान्तासु देवद्विजपरासु च ।
वसामि सत्यशीलासु स्वभावनिरतासु च ॥ १०

C. 13 517
B. 13 11 11
K. 13 32 13
M. 13 15 11

---

नरे) — After 6ab, N ins

58* अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ।

[(L 1) B1 corrupt D1-3 6 देवपरे, D7 देवरते (for °परे) D4 कृतज्ञ — (L 2) D3 6 नित्येंद्रिन, D7 यतेंद्रिये (for जि ) D1 नित्यमुनीव, D2 3 मुदार- (for °मुदीर्ण) ]

— a) D1 (by corr as in text) नाकर्मशीले — b) D1 संकरिके, G4 मम° (for नाक ) — c) M हीन (for भिन्न) D4 om न नृशंसवृत्ते Dn1, n2 -वर्णे (for वृत्ते) — d) Dn3 वापि चौरे, D1-9 स्तेनवृत्ते, T2 3 G चाविनीते, M चापि स्तेने (for चापि चौरे) B5 [अ]सूयां, T2 3 G M [अ]सूयके (for [अ]सूये) D1-3 नापावृते नैव गुरुष्वसूयो (D2 °ये), T1 न चापि हीने चरिते च मायया

7 a) B2 G1 partly damaged T1 वा (for च) D5 सत्त्वे बल (for °तेजोबल) V1 Dn सत्त्वमाना, T8 दर्पसारा (for सत्त्व°) — b) G1 damaged Dn1, n2 क्लिश्यति, T1 कुप्यति (for हृष्यन्ति) T1 M तृप्यति, T2 G2-4 तुष्यति, T3 तप्यति (for कुप्यन्ति) D3 T2 3 G2 यत्र (for तत्र) — c) V1 B Dn D9 10 चैव (for देवि) D4 तथाविधेन, D5 विधे नरे (for °विधेषु) — d) B5 om, T1 नृपेषु (for नरेषु) V1 om. (hapl) ससुप्तमनोरथेषु Dn मसुप्त-, D1-3 सप्राप्त, D4-10 ससक्त, T1 संतुष्ट, T2 3 G1 संक्षिप्त (for ससुप्त-)

8 a) D1 2 4-9 [आ]त्मन (for °नि) D3 नु (for न) — b) D4 अस्वच्छ, D7-9 अस्वस्थ (for यश्च स्व) D1, 2 यो न स्वभावोपहतोत(D1 तात)रात्मा, D3 अस्वच्छभावोपहततरात्मनि — c) V1 ते स्वल्प- (for तेष्वल्प) Dn D1-9 T1 परेषु, D10 नतेषु, T3 G2 M करेषु (for रतेषु) T2 नाह (for नित्य) T3 G1 3, 4 तेष्वप्यसंतोषकरेषु नाह (G4 नित्य) — d) T1 द्विजेषु (for नरेषु) D4-9 नाह सुतु(D5 न तु)ष्टा (for नरेषु नाह) D1, 2 चाह, T3 G1, 3 नित्य (for नाह) V1 B Dn D10 सम्यक् (for देवि) — After 8, D8 ins 61*

9 For the substitution in V1 B Dn D10, cf. v. l. 10 G1 partly damaged for 9a — b) D5 6 कृतज्ञेषु, G4 धर्मेषु (submetric) (for धर्मज्ञेषु) D2 8 धर्मनिलेषु वसुषु, D7-9 कृतज्ञेषु कृतात्मसु — D4-6 8 om (hapl.) 9cd — c) D1 [अ]न्तेषु (sic) — d) D7 धर्मज्ञेषु (for सत्त्व ) D1-8 सर्वज्ञेषु कृतात्मसु — After 9, S ins.

59* अवन्ध्यकालेषु सदा स्नानशौचरतेषु च ।
ब्रह्मचर्यतपोज्ञानगोद्विजातिप्रियेषु च ।

[(L 1) T1 G दान- (for स्नान-) ]

10 a) G1 partly damaged D4 T2, 3 G M कान्तासु, D5 T1 शान्तासु (for क्षान्तासु) — b) G4 वेद- (for देव ) — c) D5 नित्य- (for सत्य-) — d) D1-3 -विनतासु (for -निर ) — For 10cd, S subst

60* विशुद्धगृहभाण्डासु गोधान्याभिरतासु च ।

— V1 B Dn D10 subst. for 9–10 D8 ins after 8

61* स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते ।
कृतात्मनि क्षान्तिपरे समर्थे
क्षान्तासु दान्तासु तथाबलासु ।
सत्यस्वभावार्जवसंयुतासु [5]
वसामि देवद्विजपूजितासु ।

[The portion from रते च (in line 2) up to समर्थे (in line 3) is damaged in B2 — (L 3) B3 5 क्षातपरे (for क्षान्ति°) B1 D10 मसत्त्वे, D8 च सत्त्वे (for समर्थे), — (L 5) B5 नित्य (for सत्य ) D8 10 -सत्य-तासु — (L 6) B1 2 5 Dn पूजिकासु ]

प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्जयामि ॥ ११
लोलामचोक्षामवलेहिनीं च
व्यपेतधैर्यां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्जयामि ॥ १२
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥ १३
यानेषु कन्यासु विभूषणेषु
यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥ १४
शैलेषु गोष्ठेषु तथा वनेषु
सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु
क्रौञ्चावघुष्टस्वरशोभितासु ॥ १५
विस्तीर्णकूलह्रदशोभितासु
तपस्विसिद्धद्विजसेवितासु ।

11 $^{a}$) D6 प्रतीक्ष्य (for प्रकीर्ण ) V1 B3 8 Dn3 D10 अनपेक्ष ; B1 Dn1 n2 D8 T1 °पेक्ष्य-, D1 2 4 °वेक्ष (for °वेक्ष्य ) G3 -कारणीं (for -कारिणीं ) — $^{b}$) V1 तु (for च) B3 वासिनीं, D1 6-9 भाषिणीं, D5 -कारिणीं, T1 -चारिणीं (for -वादिनीम् ) — $^{c}$) G1 partly damaged. B8 om वेश्मा D2 वेश्मो च गताम् (sic) (for वेश्माभिरताम् ) — $^{d}$) V1 B Dn D10 एवंविधा तां, T G सदा शयानां (for एवंविधां स्त्रीं)

12 Dn3 D1 6 7 9 om (hapl) 12 — $^{a}$) B2 partly damaged. B1 4 5 Dn1 D5 पापाम् (for लोलाम् ) B3 अचौक्षाम्; D5 अचोयाम्, T1 अतोषाम्, T2 3 G4 अदाक्षाम्, G1 8 अद°, G2 M अताक्षाम् (for अचो°) B1 अवलेहनीं, D2 T G2 3 M °लेपिनीं, G1 °लेपनीं, G4 °लोपनीं (for °लेहिनीं ) V1 Dn3 पापामचोक्षामवलेलिहाना, D8 10 लोलामभक्ष्याम (D10 °क्ष्यास्व)वलेहिनीं सदा — $^{b}$) B1 धर्मा, D1-3 -शीला; S -शौचां (for धैर्यां) — $^{d}$) G1 partly damaged V1 B Dn1, n3 D5 8 10 T1 ता (for स्त्रीं)

13 $^{a}$) Dn3 D1-5 T1 नित्य (for नित्य) — $^{b}$) V1 B3 D6 गणान्वितासु, S बहुश्रुतासु — T1 om (hapl) 13$^{cd}$ — $^{c}$) S (T1 om) गुणान्वितासु (for पतिव्रतासु) — $^{d}$) B2 reads from सु विभूषितासु up to वसामि फु (in 14$^{c}$) on marg D1-9 सदास्मि देवि (D8 °वी) (for विभूषितासु)

14 B2 reads up to वसामि फु (in 14$^{c}$) on marg — $^{a}$) G1 partly damaged. Dn3 यामेषु, G3 यान्येषु (for यानेषु) Dn3 कल्यासु (for कन्यासु) B8 विभूषणासु, G3 °षितासु (for °षणेषु) — $^{b}$) T1 3 G वद्वेषु (for यज्ञेषु) B1 तुष्टिमत्सु, D2 वृद्धि° (for वृष्टि°) — $^{c}$) D6 om (hapl) from फुल्लासु up to सरःसु (in 15$^{b}$) — $^{d}$) D1 5 7-9 शारदासु, T3 °देषु (for °दीषु)

15 D6 om up to सरःसु (in 15$^{b}$) (cf v l 14) — $^{a}$) V1 B Dn D10 G2 गजेषु (for शैलेषु) M3 om from गोष्ठेषु up to सेवितासु (in 16$^{b}$) V1 B Dn1 n3 D8 10 [आ]सनेषु (for वनेषु) — $^{b}$) B1 शरत्सु, Dn1 सर स्व, D8 सर प्र, D9 सरत्सु (sic) (for सरःसु) — T1 repeats 15$^{c}$ after 16$^{cd}$ — $^{c}$) D8 गोषु च न (for हंसस्वन-) S (M3 om, T1 [first time]) -स्वर (T1 °न)सेवितासु (for स्वननादि°) T1 (second time) नदीषु फुल्लार्जुनसंवृतासु — G2 om (hapl) 15$^{d}$ — $^{d}$) Dn3 क्रौंचाभिघुष्ट- (for °वघुष्ट ) B4 D1 2 -स्वन (for स्वर ) B1 -भूषितासु (for शोभितासु) D4 5 क्रौंचो(D5 °चा) पघुष्टासु च निम्नगासु, D7-9 क्रौंचोपघु(D9 °दु)ष्टास्वननादितासु, T1 क्रौंचीषु मृष्टस्वरनादितासु, T2 3 G1 3 4 M1 2 4 क्रौंचान्यघुष्ट(M1 °ष्टा)स्वरनादितासु

16 M3 om 16$^{ab}$ (cf v l 15) — $^{a}$) M2 विकीर्ण (for विस्तीर्ण ) D2 -कूट- (for -कूल ) D1-9 द्रुमनादितासु (for ह्रदशोभि° ) V1 B Dn D10 विकी(Dn3 °स्ती)र्णकूलद्रुमराजितासु — D6 om (hapl) 16$^{bcd}$ — $^{b}$) B2 partly damaged B5 तपस्विनीषु, Dn1 D1 °स्विसिद्धि (for °स्विसिद्ध ) D1 7 9 शोभितासु (for सेवि° ) — B2 reads 16$^{cd}$ on marg — $^{c}$) B4 सत्य (for नित्यं) B8 स्फुरदुदकासु, D4 5

वसामि नित्यं सुबहूदकासु
　सिंहैर्गजैश्चाकुलितोदकासु ।
मत्ते गजे गोवृषभे नरेन्द्रे
　सिंहासने सत्पुरुषे च नित्यम् ॥ १६
यस्मिन्गृहे हूयते हव्यवाहो
　गोब्राह्मणश्चार्च्यते देवताश्च ।
काले च पुष्पैर्बलयः क्रियन्ते
　तस्मिन्गृहे नित्यमुपैमि वासम् ॥ १७
स्वाध्यायनित्येषु द्विजेषु नित्यं
　क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
　शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १८
नारायणे त्वेकमना वसामि
　सर्वेण भावेन शरीरभूता ।
तस्मिन्हि धर्मः सुमहान्निविष्टो
　ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ १९
नाहं शरीरेण वसामि देवि
　नैवं मया शक्यमिहाभिधातुम् ।
यस्मिंस्तु भावेन वसामि पुंसि
　स वर्धते धर्मयशोर्थकामैः ॥ २०

C. 13 527
B 13 11 21
K. 3 32. 24
M 13 15 22

इति श्रीमहाभारते अनुशासनपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

1–3 S च बहू , D10 सुबहूदकेषु ( for °कासु ) — $^{d}$) G1 partly damaged B1 कुंजरै ( for गजैर् ) D1 1–3 [उ]त्कण्ठितोदकासु D10 [आ]कुलितोदगासु ( for °कासु ) — After $16^{cd}$, T1 repeats $15^{c}$ — $^{e}$) D1 6 गजेंद्रे, M1–3 च नित्य ( for नरेन्द्रे ) — T1 om $16^{f}$ — $^{f}$) V1 B. Dn1, n- D1–. सत्पुरुषेषु, B3 °षे चापि ( for °षे च )

17 D5 om 17 — $^{a}$) T1 G हूयति ( for °ते ) D3 हव्यवाहे — $^{b}$) T2 3 M गौर् ( for गो ) D1–3 ब्राह्मण ( for °णश् ) G2 4 [अ]र्चित ( for [अ]र्च्यते ) T2 3 G1 3 M देवता ( for °ताश् ) T1 यस्मिन्गृहे पूजिता ब्राह्मणाश्च — For $17^{ab}$, V1 B Dn D10 subst.

62* यस्मिञ्जनो हव्यभुजं जुहोति
　　गोब्राह्मणं चार्चति देवताश्च ।

[ ( L 2 ) Dn3 गोब्राह्मणांश् B1 Dn1 °देवतां ( for °ताश् ) ]
While D1 6–9 subst for $17^{ab}$

63* यस्मिन्यज्ञे हूयति हव्यवाहे
　　गोब्राह्मणाभ्यर्चितदेवतासु ।

[ ( L 1 ) D7 यज्ञे ( for यज्ञे ) D6 हव्यवाहो — ( L 2 ) D6 गोब्राह्मणेष्वर्चित ( for °णाभ्यर्चित ) ]

— $^{c}$) G1. 4 कालेन, M1 कालेय ( for काले च ) T1 क्रियते ( for क्रियन्ते ) — $^{d}$) D10 G1 उपैति ( for °मि ) D1–4 6–9 तस्मिन्गृहे वासमुपैमि नित्य

18 $^{a}$) D1–3 युक्तेषु, S शीलेषु ( for नित्येषु ) V1 B Dn D3 10 सदा द्विजेषु, T1 द्विजोत्तमेषु ( for द्विजेषु नित्यं ) — $^{b}$) B. स्व ( for च ) S ( except T1 ) तथा ( for सदा ) D1–6 क्षत्रेषु सत्याभिरतेषु नित्य — $^{c}$) D1–6 वैश्येषु ( for वैश्ये च ) T1 वार्ताभिरते, G3 कृष्येभि°, M कृष्यादि° ( for कृष्याभि° ) — $^{d}$) G1 partly damaged D1–7 शूद्रेषु ( for शूद्रे च ) T1 G2–4 नित्ययत्ने, T2 3 M °यत्ते ( for नित्ययुक्ते )

19 $^{b}$) T3 om ( hapl ) from सर्वेण ( in $19^{b}$ ) to वसामि ( in $20^{c}$ ) D1–6 च सर्वभूते, D7–9 शरीरभू- ( D3 °भू )ते ( for °भूता ) — $^{c}$) D1–4 6–9 G1 3 यस्मिन् ( for त° ) D5 om हि B1 विशिष्टो ( for निविष्टो ) — $^{d}$) B6 ब्रह्मण्यभावोत्र, D3 ब्राह्मण्यता चात्र D5 6 ब्रह्मण्यता च प्रियवादिता च

20 T3 om up to वसामि ( in $20^{c}$ ) ( cf v l 19 ) — $^{a}$) D1 6 शरीरे नि ( for शरीरेण ) — $^{b}$) D1 [ए]त, D2–9 [ए]तन् ( for [ए]व ) B6 [अ]भिनेतुं, D3 °धानं ( for °धातुम् ) — $^{c}$) V1 B1 2 4 5 Dn D10 भावेन यस्मिन्नि , B3 एवविधे चैव ( for यस्मिंस्तु भावेन ) T1 य[illegible] [illegible]सामि पुंस — $^{d}$) D1 T2 G1 सवर्धते, M. [illegible] as in text) सपद्यते ( for स वर्धते ) [illegible] यशोर्थं ) D3 -काम- ( for -कामै- )

# १२

युधिष्ठिर उवाच ।
स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतन्मे संशयं राजन्यथावद्वक्तुमर्हसि ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भङ्गाश्वनेन शक्रस्य यथा वैरमभूत्पुरा ॥ २
पुरा भङ्गाश्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रः स नरव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ ३
अग्निष्टुं नाम राजर्षिरिन्द्रद्विष्टं महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामस्य चेष्यते ॥ ४
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः ।
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ॥ ५
कस्यचित्त्वथ कालस्य मृगयामटतो नृप ।
इदमन्तरमित्येव शक्रो नृपममोहयत् ॥ ६
एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः ।
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ॥ ७

---

Colophon om in $D_1$ — *Parvan name* $B_{1-4}$ $D_{n3}$ शान्ति — *Sub-parvan* $V_1$ B Dn $D_{2-7\ 9\ 10}$ M दान धर्म — *Adhy name* $V_1$ $B_{1\ 2\ 4\ 5}$ Dn $D_{2\ 8\ 10}$ $M_4$ श्री( $D_{n2}$ $D_{10}$ om श्री )रुक्मि( $M_4$ °ग्मि )णीसंवाद , $D_{4-7\ 9}$ रुक्मिणीकृष्णसंवाद , $T_2$ रुक्मिणीलक्ष्मीसंवादे श्रीस्थलकथन, $T_3$ G रुक्मिणीलक्ष्मीसंवाद — *Adhy no* ( figures, words or both ) $B_3$ 11 ( as in text ), $D_{10}$ 10, S 33 — *Śloka no* $D_{n1}$ 21 , $D_4$ 20 — After this adhy , S ins a passage given in App. I ( No 2)

## 12

1 $^{a}$) $B_1$ पुंसो (submetric) (for पुंसयो ) — $^{b}$) $T_1$ सुखं ( for स्पर्श ) $M_4$ [ऽ]भवत् ( for भवेत् ) $B_{3\ 5}$ $D_{10}$ प्रीतिः क( $D_{10}$ °तिस्त )स्याधिका भवे( $D_{10}$ °काभव )त् ❀ Cn स्पर्शो वैषयिकं सुखम् । ❀ — $^{c}$) $D_{1\ 2}$ $T_1$ $M_4$ एत ( for एतन् ) $D_3$ संशयो , $G_1$ damaged ( for °य ) $V_1$ $B_{3\ 4}$ Dn $D_{10}$ एतस्मिन्संशये राजन् — $^{d}$) $D_{1-3\ 7}$ छेत्तुम् ( for वक्तुम् )

2 $^{c}$) $B_{1\ 2\ 5}$ Dn भगास्वनेन , $D_{1-3\ 10}$ भृ( $D_{10}$ भ) गाश्वकेन , $D_{4\ 6-9}$ भृ( $D_4$ भं )गाश्वेन च , $D_5$ भृगाश्वेनेन ( for भङ्गाश्वनेन ) — $^{d}$) $D_{1-3}$ नृप , $D_{4-9}$ तदा ( for पुरा )

3 $^{a}$) $B_{1\ 2\ 4\ 5}$ Dn भगास्वनो , $D_{1-3\ 5-10}$ भृ( $D_{10}$ भ )गाश्वको , $D_4$ भगाश्वगो ( for °श्वनो ) — $^{b}$) $D_1$ देवर्षिर् ( for राज° ) $D_{1\ 7\ 8}$ इति ( for अति ) $D_{2\ 8}$ देव( $D_8$ राज )र्षिरभिविश्रुतः — $^{c}$) $V_1$ B Dn $D_{10}$ पुरुष ( for स नर ) $V_1$ $T_3$ -व्याघ्र — $^{d}$) $D_{7\ 9}$ सुप्राप्यं , $T_1$ G $M_{1-3}$ पुत्रार्थे ( for पुत्रार्थं ) $D_{4-6}$ सुप्राप्यं यज्ञमारभत् — After 3, $T_{2\ 3}$ G read 6$^{cd}$ for the first time, repeating it in its proper place

4 $^{a}$) $T_{2\ 3}$ $M_3$ अग्निष्टुद् , $G_{2\ 4}$ °जिन् ( for °ष्टुं ) $D_{1-4\ 6-9}$ नृपतिर् ( for राजर्षिर् ) $V_1$ B Dn Cn अग्निष्टुत स राजर्षिर् ❀ Cn त्रिगुणितोऽग्निष्टोमोऽग्निष्टुत् । तत्र ह्यग्निरेव स्तूयते । स च पुत्र ददाति दाशुषे इति मन्त्रवर्णात्पुत्रप्रद क्रतु । स चेन्द्रद्विष्ट । तत्रेन्द्रस्य प्राधान्याभावात् । ❀ — $^{b}$) $D_{10}$ T G द्विष्टो ( for -द्विष्टं ) $D_{1-9}$ महाक्रतु ( $D_3$ °म ) ( for °बल ) — $^{c}$) $D_3$ प्रायश्चित्येषु , $M_{1\ 2}$ °श्चित्तेन — $^{d}$) $V_1$ B Dn $D_{10}$ कामेषु ( for कामस्य ) $D_{4-7\ 9}$ पुत्रकाम स इज्य( $D_9$ दृश्य )ते , $D_8$ °कामे स उच्यते , $T_1$ °कामेषु चेष्टिते

5 $^{a}$) $D_{1\ 3}$ [ऽ]पि ज्ञात्वा , $T_3$ ज्ञात्वा च , $G_1$ damaged ( for ज्ञात्वा तु ) $T_1$ कृत ( for तु त ) — $^{b}$) $D_1$ अभागश्च , $D_3$ महाभाग , $D_{4-9}$ ह्यभ्यगात्स , $T_1$ $M_{1-3}$ अथागस्य , $T_{2\ 3}$ G तथा( $G_2$ °दा )गत्य , $M_4$ तथागम्य ( for महाभाग ) — $^{d}$) $M_{2\ 3}$ अन्वैच्छन् , $M_4$ अन्वै° ( for अन्वि° ) $T_{2\ 3}$ G प्र ( for नि ) $T_1$ अभ्यगच्छद्यतात्मन — After 5, N ( except $D_3$ ) ins

64* न चैवास्यान्तरं राजन्स ददर्श महात्मन ।

[ $D_{n3}$ चैव वापि , $D_{10}$ [ए]व तस्य ( for चैवास्य ) $D_{1\ 2\ 4-9}$ य( $D_3$ जि )तात्मन ( for महा° ) ]

6 $^{b}$) $V_1$ B Dn $D_{10}$ मृगया ( $V_1$ $B_2$ $D_{n3}$ °व्य ) गतवान्नृप , $D_5$ °यायामटन्नृप , $T_1$ °यायै गतो नृप , $T_{2\ 3}$ $G_{1\ 3\ 4}$ M °यामटते नृप — $T_{2\ 3}$ G read 6$^{cd}$ for the first time after 3 — $^{c}$) $V_1$ $B_4$ [ए]व

7 $^{a}$) $B_1$ $D_{10}$ तु , $D_{1\ 4-9}$ स ( for च ) $T_1$ एको

इतश्चेतश्च वै धावञ्श्रमतृष्णार्दितो नृपः ।
मरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा ।
सोऽवगाह्य सरस्तात पाययामास वाजिनम् ॥ ८
अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः ।
अवगाह्य ततः स्नातो राजा स्त्रीत्वमवाप ह ॥ ९
आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः ॥ १०
आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ।
अग्निष्टुं नाम इष्टं मे पुत्राणां शतमौरसम् ॥ ११
जातं महाबलानां वै तान्प्रवक्ष्यामि किं त्वहम् ।
दारेषु चास्मदीयेषु पौरजानपदेषु च ॥ १२
मृदुत्वं च तनुत्वं च विक्लवत्वं तथैव च ।
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः ।
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ १३
पौरुषं विप्रनष्टं मे स्त्रीत्वं केनापि मेऽभवत् ।
स्त्रीभावात्कथमश्वं तु पुनरारोढुमुत्सहे ॥ १४
महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तम ॥ १५

C. 13 544
B 13 12. 17
K. 13 34 17
M 13 17 18

---

वनेय रानपिंद् — $^{b}$) G1 श्रात (for श्रान्त) — $^{c}$) D1 [ऽ]गिर्मत (sic), D4–2 विंदति (for ऽन्वित) T2 G न दीनो विंदति नृप (T2 जल) — $^{d}$) V1 तथा, D5 नृप, D नृप, D नृप (for तदा)

8 $^{a}$) T1 शनैर् (for च वै) Dn1 n2 D2 9 वै राजन्, D4–6 धावन्स, G1 वै यावत (for वै धावन्) — $^{b}$) V1 Dn3 T2 तृष्णान्वितो (for °र्दितो) D1 8 10 G3 नृप (for नृपः) Dn1 n2 D5 श्रमतृष्णान्वितो नृप — $^{c}$) D4–7 स (for सु) D2 3 विपु(D3 °म)ल (for रुचिर) — $^{d}$) D2 3 पूर्वं परमवारिधिं — $^{e}$) D2 3 सो(D3 स)वगाहत (hypermetric) (for °गाह्य) M1–3 ततस् (for सरस्) V1 तावत्, B3 तत्र, D10 स्नात (for तात) — $^{f}$) D1. 7–9 पायित्वा च (D1 3 8 9 °त्वाय) वाजिन, D10 ह्रययामास वा°

9 B2 damaged for 9$^{a}$ — $^{b}$) S transp वृक्षे and बद्ध्वा D2 G2 4 नृपोत्तम — T1 om 9$^{cd}$ — $^{c}$) B1 Dn1 तात, D1 9 वारि, M स्वेदो (for स्नातो) — $^{d}$) D5 तत्र (for राजा) M च (for ह) V1 B Dn D10 तत्र स्त्रीत्वमवाप्तवान

10 $^{a}$) G1 partly damaged D1–4 6–9 G1 ज्ञात्वा (for दृष्ट्वा) — $^{b}$) D1–9 व्रीडितो नृपनिम्नदा, S (except T1) व्रीलितो नृपसत्तम (T2 3 M1 °म) — $^{c}$) D1–9 चिंतामन्वगमत्पापा (D2 °प, D3 °र्थं), D10 °सुपगत सोय — $^{d}$) S -मानस (for -चेतन) D10 सर्वात्मा व्याकुलेंद्रिय

11 $^{a}$) D2 3 आरोक्ष्यामि, T1 °हिष्ये (for °हिष्ये) B1 च (for तु) D1 4–9 आरोक्ष्यामि कथ ह्य(D1 ह्य)श्वं — $^{b}$) D1 2 4–9 ता पुरीं, T1 तत्पुर (for वै पुरम्) — $^{c}$) V1 B Dn D8 10 इष्टेनाग्निष्टुता चा(B1 8 5 Dn3 षा)पि, D1 अग्निष्टुता च यष्टे मे (sic); D2 3 अग्निष्टुता (D3 °ना) तथेष्ट्वा मे, D4–6 अग्निष्टोमेन यज्ञेन, D7 9 अश्रुताय च यज्ञेन, T1 अग्निष्टुर्नाम चेष्ट मे

12 $^{a}$) V1 B Dn D10 मे, G1 damaged (for वै) — $^{b}$) G1 partly damaged D1–3 7–9 च (for प्र) D2 [अ]ह (for किं) V1 B1 T G त्वह, D5 कथ (for त्वहम्) D4 6 तान्वक्ष्याम्यह कथ (submetric) — $^{c}$) B2 partly damaged V1 B1. 3–5 Dn D5 10 T2 3 M3 चा(Dn3 वा)स्मकीयेषु, D7 चात्मदारेषु, D8 9 चात्मदेयेषु (for चास्मदी°) — T2 om (hapl.) 12$^{d}$–16$^{b}$

13 T2 om 13 (cf. v 1 12) — $^{a}$) D1–4 6–9 तनु(D1 तत्र)त्व च मृदुत्व च — $^{b}$) B3 विह्वलत्व (for विक्लवत्व) T1. 3 G पराधीनत्वमेव च — After 13$^{ab}$, T3 G ins

65* हावभावादिलावण्यस्त्रीगुणाढ्या कुतूहलम् ।
[T3 G3 4 भावाभावाल्लिवण्य-, G2 भाव (for the prior half) G2 त्रिगुणाद् (for स्त्री°)]

— $^{c}$) M ऋषिभि — $^{d}$) G1 partly damaged. B1 -तत्त्वानु (for -तत्त्वार्थ-) — $^{e}$) V1 B Dn D10 व्यायामे, D5 G2 °म (for °म)

14 T2 om 14 (cf v 1 12) — $^{a}$) G1 पौरुष्य D2–4 6 T1 G1 3 4 विप्रणष्ट V1 B2 4 Dn D10 वै (for मे) — $^{b}$) D1 6–9 [अ]थि (for [अ]पि) D2 2 8 भवेद् (for ऽभवत्) — After 14$^{ab}$, D1–6 read 16$^{cd}$ for the first time, repeating it in its proper place — $^{c}$) V1 B (except B2) Dn1 n2 D1 7–10 T1 पुनर् (for कथम्) V1 B Dn त, D1–10 च, T1 मे, G1 नु (for तु) — $^{d}$) V1 B (except B2) Dn1 n2 D1. 6 7–10 कथम् (for पुनर्) T1 आरोढु नोत्सहे पुन

17 पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
18
17 किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ १६
अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ १७
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ १८
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
अतृप्त इव पुत्राणां दाराणां च धनस्य च ॥ १९
उवाच पुत्रांश्च ततः स्त्रीभूतः पार्थिवोत्तमः ।
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ।
अभिषिच्य स पुत्राणां शतं राजा वनं गतः ॥ २०
तामाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत ।
तापसेनास्य पुत्राणामाश्रमेऽप्यभवच्छतम् ॥ २१
अथ सा तान्सुतान्गृह्य पूर्वपुत्रानभाषत ।
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ॥ २२

---

15 T2 om 15 (cf v 1 12) — a) G1 partly damaged V1 B Dn D10 यत्नेन, D1-8 वेगेन (for खेदेन) T1 महत्त्वात्त्वथ खेदस्य — b) B2 partly damaged G1 8 नराधिप D2 8 सोऽश्वमारुह्य भूपति — c) B2 damaged D8 पुरीं (for पुर) — d) V1 B1 2 Dn1 n3 D10 स्त्रीकृतो (for °भूतो) V1 B1 8 Dn D1 8 5-9 T1 8 सत्तम (for °म)

16 T2 om 16ab (cf. v 1 12) — a) Dn3 D1 3 4 6-9 S (except G2, T2 om) पुत्रदारा( D7 °सा )श्च (for पुत्रा दाराश्च) — b) B1 3-5 त; T1 ये (for ते) D1-9 पौरजानपद च तत् — D1-6 read 16cd for the first time after 14ab — c) B1 Dn D1 T2 G1 3 4 M8 त्विद तु; D2 8 इद तु (D8 हि), D4 (both times) न्वेतद्, D5 6 (both both times) 7-9 त्वेतद् (for न्विद तु) — d) G1 partly damaged V1 D1 4-6 (last three first time) गत. (for गता)

17 b) G8 4 वर (for वर) D8 स्त्रीभूतो नृपसत्तम — c) V1 B2 Dn1 अह, B8 5 अथ, S चास्मि (for अस्मि) D4 नियतो (for निर्यातो) — d) B8 5 सह (for दृढम्) T1 सुघोर प्राविश वन — T1 om 17ef — e) D7 प्राविशद्, D8 9 प्राविशद् B2 5 D10 M1 घोरम् (for घोराम्) — f) T2 8 G1 8 4 परि- (for दैव-) V1 B Dn D10 -चोदित (for मोहित)

18 B2 partly damaged for 18ab — a) G1 partly damaged D7 स (for सु). — b) D1 4 6-9 M1-8 तृषार्तो (for तृष्णा°) — c) D1 सुरुचिरं Dn3 सर सुरुचिर पुण्यम्, D1-9 सर शुचिजल पुण्यम् — d) D8 अगमस्, G2 अपश्यत् (for °श्य) D1 2 T1 युतं (for वृतम्) D4-6 अद्राक्ष पक्षिसकुल; D7-9 अपश्य पक्षिसयुत

19 a) V1 अत्र; M1-8.4 (inf. lin.) सरो (for तत्र) D7 [अ]वगाह्य, M8 4 °गाढं (for °गाढ) — b) V1 B Dn D10 दैवेनाह कृत पुरा (B8 °न) — Before 19cd, M2-4 ins भीष्म — cd) D6 अदृस, T1 अवृत्त (for अतृप्त) D1-9 T2 8 G M2-4 एव (for इव) T1 transp पुत्राणा and दाराणां — For 19cd, V1 B Dn D10 subst

66* नामगोत्राणि चाभाष्य दाराणां मन्त्रिणा तथा ।

20 a) V1 B Dn D10 आ( Dn3 प्रा )ह पुत्रास्तत सोथ — b) G1 8.4 पार्थिवोत्तम — cd) D6 स्त्री (for स) D1 lacuna for राज्य वन यास्यामि D2 8 युष्माभिरिह पुत्रका (for 20d) — For 20ef, V1 B Dn D5 10 subst.

67* एवमुक्त्वा पुत्रशत वनमेव जगाम ह ।

While, S subst for 20ef

68* स पुत्राणा शतं राजा अभिषिच्य वन गत ।
[Before the above, M1-8 ins भीष्म ]

21 a) B2 partly damaged D4 6 आश्रमी, T1 G चाश्रमे, T2 8 M त्वा° (for आ°) V1 B Dn D5 10 गत्वा चैवाश्रम सा तु — b) V1 B Dn D7 10 तापस (Dn2 °से) प्रत्यपद्यत (B1 °द्य च), D1 6 8 9 °सेप्वभ्य- (D8 9 °स )पद्यत, D7 °स्येप्यय° — c) D1 partly damaged. D2 8 तत्रापि चैव पुत्राणाम्, D4 6-9 तापसाचैव पु° — d) B2 Dn D5 T8 G1 आश्रमेषु, D1-3 6-9 °मेस्य, G2 आश्रमेपि; G8 तापसेषु (for आश्रमेऽपि)

22 a) D2 8 सुतान्पूर्वान्, G2 प्रगृह्याशु (for सुतान्गृह्य) V1 B Dn D5 10 अथ सादाय तान्सर्वा( B8 4 D10 °न्पुत्रा )न् — b) D1 4 6-9 पूर्वान् (for पूर्व-) D2 8 गृहीत्वा वाक्यमब्रवीत् — c) D1 6 7 9 तथा, D8 यथा (for सुता) — d) Dn3 वेमे शत, D1 lacuna, D2 8 चैवे हि मे (for चेमे शत)

एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ।
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ २३
तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाभिपरिप्लुतः ।
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २४
ततो ब्राह्मणरूपेण देवराजः शतक्रतुः ।
भेदयामास तान्गत्वा नगरं वै नृपात्मजान् ॥ २५
भ्रातृणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः ।
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥ २६
यूयं भङ्गाश्वनापत्यास्तापसस्येतरे सुताः ।
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा ।
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः ॥ २७
इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह ॥ २८
ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ।
केन दुःखेन संतप्ता रोदिषि त्वं वरानने ॥ २९
ब्राह्मणं तु ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ।
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते ॥ ३०
अहं राजाभवं विप्र तत्र पुत्रशतं मया ।
समुत्पन्नं सुरूपाणां विक्रान्तानां द्विजोत्तम ॥ ३१
कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ।
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम ।

C. 13 563
B. 13 12.36
K. 13 34 35
M. 13 17 35

---

23 $^a$) D1 एकन्त्र, M एमिश्च (for एकत्र) —$^c$) D10 तेच (for तेऽथ) —$^d$) G2 4 तया (for तदा)

24 $^a$) D1 partly damaged. D2 8 तान्दृष्ट्वा तु (D2 om. तु) मम भ्रातॄन् —$^d$) V1 B Dn D10 T3 [अ]थ (for [अ]भि) D2 -परिप्लुत —$^e$) B5 उपहारो (for °कारो) —$^f$) B2 3. 5 [अ]पकृतो (for °कृतं)

25 $^a$) S (except G2) -वेषेण (for रूपेण) —$^d$) B3 गुरुवन्वै, D1–3 नगरे वै, T1 °रे तान्, T2 3 G °रेषु, M °रे तु (for °रं वै)

26 $^a$) T1 [पु]त्र (for [अ]स्ति) B1 D4–6 सौहार्दं (B1 °र्द्यं) (for सौभ्रात्रं) —$^b$) D1 यदि, D3 येच D4–7 9 ये तु (for येऽपि) — D2–4. 8 om. (hapl) 26$^c$–27$^b$ —$^c$) D1 **दिस्वा, D5 7 9 विविदिता (for विव°) —$^d$) V1 B2 4 D6 कस्यपस्य, T2 3 G2–4 M काश्य°, G1 damaged (for कश्य°) D1. 5–7 9 सुता पुरा, T1 पुरा सुता (for सुरासुरा)

27 D2–4. 8 om 27$^{ab}$ (cf v l. 26) —$^a$) Dn1 यं यं (for यूयं) V1 B (except B3) Dn भंगाश्वनापत्यास्, D1. 5–7 9 भृगाश्वतनया(D1 °कसुता)स्, S भगाश्वनो(G2 M °श्वना, G4 °श्विनो)पत्यं — T G om. 27$^{cd}$ —$^c$) V1 काल्पपस्य D1. 2 6–9 [अ]सुराश्, D10 सुताश् (for सुराश्) D5 चैवं M काश्यपस्य सुताश्चैव —$^d$) D1–9 वि(D4 om वि)बुधाश् (for असुराश्) B3 तु (for च) V1 D10 M2–4 सुरास् (for सुतास्) D1–8 यथा, M सदा (for तथा) —$^e$) D1 पैत्रकं, D8 पैतृकी (for °कं)

28 Before 28, T1 ins. भीष्म· —$^a$) D1–8 [ऽ]त्र, D3 8 वै (for तु) —$^b$) B1 D8 9 अपातयत्, G1 damaged. —$^c$) Dn3 एतच्छ्रुत्वा (hypermetric), D1–7 9 श्रुत्वा तु, D8 श्रुत्वापि (for तच्छ्रुत्वा) Dn3 वा (for च) —$^d$) D4 प्रारुरोद T G संतप्ता (T1 रुरोद) भृशदुःखिता

29 $^a$) Dn3 D1 [अ]त्येत्य (for [अ]भ्येत्य) T2 3 G पुनर्ब्राह्मणवेषेण —$^b$) D1 तम् (for ताम्) B3 [अ]न्वगच्छत, D1. 4–9 [अ]नुपृच्छ(D4 °च्छे)त —$^{cd}$) T2. 3 G संतापं करोषि (for संतप्ता रोदिषि)

30 $^a$) G1 partly damaged. D8 ब्राह्मण्यं (for °णं) V1 B (except B1) Dn त, D10 om (for तु) —$^b$) T G वचनम् (for करुणम्) —$^c$) B1 विप्र (for ब्रह्मन्)

31 $^a$) D1–9 पूर्वं (for विप्र) —$^b$) T1 तद्धि (for तत्र) Dn2 पूर्वं (for पुत्र-) V1 B Dn D10 T1 मम (for मया) —$^c$) D1–4. 6–9 उत्पादितं (for समुत्पन्नं) V1 B2–5 Dn2 n3 D7 T2 3 M3 4 Cn स्व, Dn1 स (for सु-) ❀ Cn स्वरूपाणां स्वस्येव रूपं येषां तेषाम् । ❀ —$^d$) T2 partly damaged. G1. 3. 4 M नरोत्तम, G2 नरर्षभ (for द्विजोत्तम) V1 B Dn D10 पुत्राणां ब्राह्मणोत्तम

32 D2 3. 8 om. (hapl.) 32$^{abcd}$ —$^a$) G1 partly damaged. T2 मृगयाभ्रात, T3 G2–4 °शावाक्ष (for °या

पुत्रान्राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ ३२
स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।
आश्रमे जनितं ब्रह्मन्नीतास्ते नगरं मया ॥ ३३
तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज ।
एतच्छोचामि विप्रेन्द्र दैवेनाभिपरिप्लुता ॥ ३४
इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत्परुषं वचः ।
पुरा सुदुःसह भद्रे मम दुःखं त्वया कृतम् ॥ ३५
इन्द्रद्विष्टेन यजता मामनादृत्य दुर्मते ।
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते यातितं मया ॥ ३६
इन्द्रं तु दृष्ट्वा राजर्षिः पादयोः शिरसा गतः ।
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ।
इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ॥ ३७
प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ।
पुत्रा वै कतमे राजञ्जीवन्तु तव शंस मे ।
स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ॥ ३८
तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः ।
स्त्रीभूतस्य हि ये जातास्ते मे जीवन्तु वासव ॥ ३९
इन्द्रस्तु विस्मितो हृष्टः स्त्रियं पप्रच्छ तां पुनः ।
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥ ४०
स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् ।

---

यात ) —[b]) D1 उद्दातो ( for उद्भ्रान्तो ) —[c]) S सरोहमवगाढ( M4 °त्र )श्च —[d]) B5 स्त्री भूत्वा D1 4–7 9 स्त्राभूतोस्मि द्वि( D5 °स्मिन्द्वि )जोत्तम, S °तो द्विजसत्तम —[f]) D5 अस्मिंस् ( for अस्मि )

33 [a]) D4 स्त्रिया, D6 7 9 स्त्रिया, G1 स्त्रियश् —[c]) D1 अत्र मे, G1 damaged ( for आश्रमे ) D2 8 अत्र ते ( D8 मे ) जनिता ब्रह्मन् —[d]) Dn1 n2 T2 नीत तन् ( for नीतास्ते ) D2 तेन वनं, D8 ते नगरे T G प्रति ( for मया )

34 [b]) D2–5 8 S दै( D8 T2 8 दे )व ( for काल ) M वा ( for वै ) —[c]) T2 8 G ह्रत्यामि ( for शोचामि ) V1 B Dn D10 [अ]ह ( V1 चै ) ब्रह्मन्, D6 M4 रा( M4 [*inf lin* ] द्वि )जेंद्र ( for विप्रेन्द्र ) —[d]) V1 B Dn D10 समभि- ( for [अ]भिपरि ) T1 8 G प्लुत ( for -प्लुता )

35 [a]) D2 8 इद्रो दृष्ट्वा दु खिता ताम् —[b]) D5 ह्यब्रवीत्, D7 T1 प्रा°, M [अ]था ( for अ° )

36 [a]) D4–9 द्विष्ट च; T1 -द्वेषेण ( for -द्विष्टेन ) D8 जपता ( for यजता ), —[b]) T G कर्मणा ( for दुर्मते ) Dn1, n2 Cn मामनाहूय धिष्ठितं ❀ Cn धिष्ठित अधिष्ठितम् । क्रतुनिति शेष । ❀ —[c]) D8 इद्रो दृष्टा दु खिबुद्धे ( *sic* ) —[d]) B1 घातित; B3 प°, Dn2 n3 D5–9 G1 8 पा°, D2 8 प्रापिता ( for यातितं ) G2 वैरं ते याति कर्मणा

37 [a]) V1 B3–5 Dn D2 5 T G दृष्ट्वा तु ( by transp ), B1 दृष्ट्वा स —[d]) G1 partly damaged Dn1 पितृ- ( for पुत्र ) G4 सत्कृत ( for स क्रतु ) —[f]) D6 तन्मे त्व, D7 ततस्त्वं मे ( hypermetric ) ( for तत्र मे ) —After 37, B4 ins

69* इन्द्र सुरपतिश्चैव वज्रहस्तो महाबल ।
ऐरावतगजारूढ सहस्राक्ष नमोऽस्तु ते ।

38 [a]) D1–9 तेन ( for तस्य ) —[c]) V1 B Dn D2 8 8 10 ते ( for वै ) B4 कतमो, D5 6 कतमा ( for °मे ) D4 पुत्राश्चैकतमो राजन् —[d]) D8 जीवीतु ( *sic* ) ( for जीवन्तु ) D° 8 वत ( for तव ) D9 ते ( for मे ) V1 B Dn D5 10 जीवन्त्वेतव्यचक्ष्व ( D8 °शस ) मे —B1 Dn3 om ( hapl ) 38[e]–39[b] D1 om ( hapl ) 38[e]–40[d] T1 om 38[ef] D8 reads 38[ef] twice —[e]) D8 ( second time ) [अ]पि ( for हि ) V1 D4 6 मे ( for ये ) —[f]) G1 partly damaged V1 B4 [इ]ह ( for [अ]थ ) D8 ( second time ) 4–9 च ते ( for ऽभवन् ) D2 8 ( first time ) ते मे जीवतु पुत्रका

39 B1 Dn3 om. 39[ab], D1 om 39 ( for all, cf v l 38 ) —[a]) Dn2 तापसा ( for °सी ) Dn2 तु; D3 4 6–9 च ( for तु ) —B5 om ( hapl ) 39[c]–41[d] Before 39[cd], B1 ins स्त्री उवाच —[c]) B1 भूतया ( for -भूतस्य ) D2 च, D10 S [ए]व ( for हि ) V1 B2–4 Dn1 n2 पुत्रास् ( for जातास् ) —[d]) D1–9 वै, D10 G [s]मी ( for मे )

40 D1 om 40 ( cf v l. 38 ) B5 om 40 ( cf. v l 39 ) T2 om ( hapl ) 40[a]–41[b] —[a]) T1 सु- ( for तु ) V1 B ( B5 om ) Dn3 D5 भूत्वा, Dn1 n2 D8 4 6–9 दृष्ट्वा ( for हृष्ट ) —[b]) D5 स्त्रिय ( for पुन ) —[d]) D4 om सुतास्तव D8 तु व ( for तव )

41 T2 om 41[ab] ( cf v. l 40 ) —[a]) B1 -कृतस्य

कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥ ४१
स्त्र्युवाच ।
स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै ।
तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ ४२
भीष्म उवाच ।
एवमुक्ते ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ।
सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ ४३
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसि ॥ ४४
स्त्र्युवाच ।
स्त्रीत्वमेव वृणे शक्र प्रसन्ने त्वयि वासव ॥ ४५
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ।
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ॥ ४६
एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ।
स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ।
एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥ ४७
रमे चैवाधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन हि तुष्टोऽस्मि गम्यतां त्रिदशाधिप ॥ ४८
एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ४९

C 13 581
B 13 12. 54
K. 13 34 54
M 13 17 53

इति श्रीमहाभारते अनुशासनपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

(for न्नू॰) B1 Dn3 G च (for हि) —ᵇ) D1–, 7–9 तेभ्यधिक, D5 तेभ्य (for तेभ्यो॰) T1 2 G1 3 4 तेभ्यस्तेभ्यधिका कथ, G2 तेभ्यस्ते ह्यधिका कथ — T1 om 41ᶜᵈ —ᵈ) V1 om इह S (T1 om) त्व वक्तुम् (for वक्तुमिह)

42 T2 G2 om the ref T2 राजा, G1 3 4 तापसी (for स्त्री) —ᵃ) G1 partly damaged Dn1 G1 4 स्त्रियस् D1–2 अभ्यधिक, D7 त्वभ्य (for स्त्वभ्य॰) D1–6 8 9 स्त्रिय स्व(D5 ॰स्त्व)त्वाधिक स्नेहो —ᵇ) D3 हि (for वै) —ᵈ) B Dn D1 2 10 -कृतस्य मे, D1–9 -कृताश्च मे (for कृतस्य वै) D3 जाता स्त्रीकृतकस्य च

43 S (except M4) om the ref —ᵃ) V1 B1–4 Dn D3–10 G4 उक्तम् (for उक्ते) B5 एवमुक्तस्तु देवेंद्रस्, T1 ॰स्तत्परमेंद्रो —ᵇ) T1 वचनं ताम् (for प्रीतो वाक्यम्) B5 ता स्त्रिय प्रत्युवाच ह — B4 om 43ᶜ–44ᵈ —ᶜ) D1–9 एत हि (D1 इ) (for एवेह) —ᵈ) T2 3 G वादिन (for नि)

44 B4 om. 44 (cf. v l 43) —ᵃ) V1 वृत्त, G1 damaged (for वर) B1 D1 6 8 वृणु(D1 ॰णी)ष्व, T1 2 च वृणु (for च वृणु) —ᵇ) D1 T1 यत् (for य) —ᶜ) V1 om , D1–9 अयो, D10 अत (for अथ) D1 स्त्रीत्वे —ᵈ) V1 काङ्क्षसे, B (B4 om) Dn D10 -काङ्क्षसे, T3 G2 M काङ्क्षित, G1 8 -काङ्क्षति (for ॰सि)

45 G1 4 om the ref T2 3 G1 3 तापसी (for स्त्री) —ᵃ) D2 8 [त]स्तु मे (for वृणे) —ᵇ) D2 8 वासवे (for व) V1 B Dn D10 पुरुष नेच्छामि वासव

46 ᵃ) M1 2 राजेंद्रस् (for देवेन्द्रस्) —ᵇ) D1–9 ता स्त्रिय प्रत्यभाषत —ᵈ) V1 B2 (marg) Dn चोदयसे, D2 8 त्व (D2 om. त्व) मेयसे (for रोचयसे) T2 प्रभो (for विभो)

47 ᵇ) V1 D4 4 8 9 T3 G3 सत्तम —ᶜ) D3 स्त्रिया, D1–6 8–10 T2 8 G1 2 4 M1–3 स्त्रिय (for स्त्रियाः) D1 damaged, S सयोगात् (for ॰गे) —ᵈ) D1 6 अभ्यधिका (for अभ्य॰) T3 G2 तदा (for सदा) —ᵉ) D2 3 अधिक (for कारणात्) T G देव, M राजन् (for शक्र)

48 ᵃ) D1–3 रमे किं च, D1–8 S रमामि च (G1 वा), D9 रमिता च, D10 रमे चैव (for रमे चैव) B5 [अ]धिके V1 B2 Dn3 रमे चा(Dn3 वा)भ्यधिक स्त्रीत्वे, Dn1 n2 रमताभ्यधिक स्त्रीत्वे —ᵇ) T1 सुर (for देव) —ᶜ) D1–10 S च (for हि) V1 B Dn1 n2 D1–8 T1 तुष्टास्मि, Dn3 तुष्यामि (for तुष्टोऽस्मि) D1–8 स्त्रीस्व (D3 ॰स्व)भावेन तुष्टोस्मि —ᵈ) D1 om (hapl) from त्रि up to तामापृच्छ्य (in 49ᵇ) D1–3 गम्यता त्रिदशेश्वर

49 D1 om up to तामापृच्छ्य (in 49ᵇ) (cf v l 48) —ᵃ) D1 2 M1 2 तम्, T1 G2 [अ]थ (for ताम्) —ᵇ) D5 6 आपृच्छत्, M आपृष्ट्वा (for ॰च्छ्य) T1 om त्रि D10 T G ययौ (for गतः) — Before

# १३

युधिष्ठिर उवाच ।
किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥ १
भीष्म उवाच ।
कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत् ॥ २
प्राणातिपातं स्तैन्यं च परदारमथापि च ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ३
असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ४
अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ५
तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।
शुभाशुभान्याचरन्हि तस्य तस्याश्नुते फलम् ॥ ६

इति श्रीमहाभारते अनुशासनपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

49[cd], T1 ins भीष्म — [c]) M1–8 स्त्रियो — [d]) D2 8 ह्यधिका

Colophon om in D1 2 4–9 T1 M4 — *Parvan name* B1–4 Dn8 शांति — *Sub-parvan* V1 B Dn D10 M1–8 दानधर्म — *Adhy name* B1, 2 4 5 Dn M1–8 भ(M8 भां)गास्वनो(B1 °सुरो, M1 8 °श्वनो)पाख्यान, D8 भृगाश्वकोपाख्यान, T2 इंद्रसदृंद्रसंवादे स्त्रीपुंसयोगे स्त्रिया अधिकप्रीतिकथन — *Adhy no* (figures, words or both) V1 B8 Dn1 12 (as in text), B2 11, T2 3 G M1–8 35 — *Śloka no* Dn1 54, D4 53

## 13

1 [a]) B5 D10 G मनुष्येंद्र (for °ष्येण) — M1–8 read 1[cd] twice — [c]) D8 हि (for वै) B1 8 लोक-यात्रा B1 D8 वै; B8 5 M1–8 (last three second time) च (for तु) D1 4–9 कथं हि (D5 वै) लोक यात्रा वै (D1–8 हि), D10 S (M1–8 first time) श्रेय पर मनुष्येंद्र ❀ Cn लोकयात्रा ऐहिकशिष्टव्यवहार, हित च पारलौकिक श्रेय, तदर्थिना। लोकयात्रां लोकद्वयश्रेय साधनम् । ❀ — [d]) Dn8 M1–8 (last three first time) किंशीलस्तु; D5 कथशील, T1 किं शील च, M1–3 (all second time) कीदृशी च (for किंशीलश्च)

2 D10 om the ref After the ref, D10 S ins

70* देवे नारायणे भक्तिः शंकरे साधुपूजया ।
ध्यानेनाथ जपै कार्या स्वधर्मैः शुचिचेतसा ।

[ (L 1) T1 वाथ, M वा सु- (for साधु) — (L 2) G3 जप कुर्यात् (for जपै कार्या) G3 स्वधर्मे, M °र्म- (for °र्मैः) D10 शुद्ध (for शुचि-) ]

— [a]) B2 विविध, D2 4 6 त्रिदिव (for त्रिविध) D1 8 चैव, D2 पाप, S चापि (for कर्म) — [b]) Dn8 वापि, D1 2 4–9 चैव, T2 8 M [अ]पि च (by transp) — [c]) D6 वैव; D10 S चापि (for चैव) — [d]) D2 om, G1 शुभ (for दश) D1 2 धर्म (for कर्म) D5 6 8 पथस्त्यजेत्, G1 damaged, M पथ चरेत् D10 T G2–4 शुभ (T2 दश) कर्मफलं चरेत् ❀ Cn कर्मपथान् स्वाभाविककर्ममार्गान् । ❀

3 =(var) Śārṅg P 635 — [a]) V1 D1 प्राणाभि- (for °ति) Dn8 D8 T2 8 पात (for -पात) B5 स्तैन्य तु, D10 G4 स्तैन्यस्व (for स्तैन्यं च) T1 प्राणिभूतक्षत स्तैन्यं, M1 2 प्राणातिपातनं स्तैन्य — [b]) V1 B Dn2 n8 दारान्, D8 दार्यम् (for दारम्) B1 वा (for च) D4–7 9 पा(D9 प)रदार्यमथापि वा; D10 T G परदाराभिमर्शन — [d]) D1–9 नित्यश, G4 सर्वं च (for सर्वत)

4 =(var) Śārṅg P 636 — [ab]) B4 T1 पैशुन्यं पारुष्यम् (by transp) Dn D4–9 T8 M1 4 पैशून्यम् — [c]) G1 partly damaged D10 S (except M8) एतानि (for चत्वारि) — [d]) Dn8 D2 जल्प(D2 °प)न् (for जल्पेन्) D1–8 नापि (for नानु-) D4–9 न कुर्यान्नापि चिंतयेत्

5 =(var) Śārṅg P 634 — [a]) D1 8 G3 M अन-(D8 °ना)भिध्यां (G4 °ध्यं) (for °भिध्या) D4–9 परार्थेषु (for परस्वेषु) — [b]) T8 सत्य सर्वेषु सौहृद — [d]) G4 स्मरेत् (for चरेत्)

6 [b]) D10 चरेयु (for [आ]च°). — [c]) Dn8 [आ]-

# १४

युधिष्ठिर उवाच ।
पितामहेशाय विभो नामान्याचक्ष्व शंभवे ।
बभ्रवे विश्वमायाय महाभाग्यं च तत्त्वतः ॥ १

भीष्म उवाच ।
सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।
शिवाय विश्वरूपाय यन्मां पृच्छद्युधिष्ठिरः ॥ २

C. 13 6'6 B 13 14 18 K. 13 45 2 M 13 22.2

चरति (for °रन्ति) — For 6$^{cd}$, D10 T G subst.

71* शुभान्येवाचरल्लोके भक्तो नारायणस्य हि ।
तस्यैव तु पद सूक्ष्मं प्रमादादनुयात्परम् ।

[ (L. 1) G1 partly damaged D10 चरल्लँ T1 शुभानीह चरस्तान (for the prior half) T1 ह (for हि) — (L 2) G2 आप्नुयात् (for °नु°) T1 G1 4 पद (for प°न्) ]

Colophon om in M1 — *Parvan name* B1 2 4 Dn3 D1 शाति — *Sub parvan* V1 B1 2 4 6 D (except D5) M2-4 दानधर्म — *Adhy name* V1 B. दुर्गापपरि( V1 °री )हार, B1. 2 Dn M1 भगान्व( M4 °श्व )नोपाख्यान, B4 दानधर्मोपाख्यान, T2 त्रिविधकरण व्यापारकथन — *Adhy no* (figures, words or both) V1 B2 13 (as in text), D. 12, T1 M1 35, T2 8 G M1 8 36 — *Śloka no* Dn1 6, D1 59 — After this adhy., D10 T2 3 ins a passage given in App I (Nos 3 and 3A)

## 14

☞ G1 3 om. adhys 14–18 T1 reads this adhy after B 13 160

1 After the ref, N ins

72* त्वयापगेय नामानि श्रुतानीह जगत्पते ।

[ D2 3 त्वया ने °दिदानीह, D4-9 त्वया हि प्रोच्यमानानि (for the prior half) D2 3 नामानि त्रि- (for श्रुतानीह) D6 7 9 जगत्पते V1 D8 श्रुतानि ह जगत्पते (for the post half) ]

— $^{a}$) D3 10 T1 पितामहेशस्य विभो (T1 °भोः), T2 3 G2 4 °नह महेशाय — $^{b}$) B2 5 मे विभो, D1-8 शंकरे, T1 शूलिन (for शंभवे) — $^{c}$) B3 रुद्राय, T G2 4 M4 विरूपे (for बभ्रवे) D1-9 विष्णु (for विश्व ) V1 B Dn D10 -रूपाय (for -मायाय) — $^{d}$) D2 महाभाग्ये B1 भारत (for तत्त्वत ) — After 1, N ins

73* सुरासुरगुरौ देवे शंकरेऽव्यक्तयोनये ।

भीष्म उवाच ।

अशक्तोऽहं गुणान्वक्तुं महादेवस्य धीमतः ।
यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ।
ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च ।
ब्रह्मादयः पिशाचान्ता य हि देवा उपासते । [ 5 ]
प्रकृतीनां परत्वेन पुरुषस्य च यः परः ।
चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ।
अक्षरं परमं ब्रह्म असच्च सदसच्च यः ।
प्रकृतिं पुरुषं चैव क्षोभयित्वा स्वतेजसा ।
ब्रह्माणमसृजत्तस्माद्देवदेवः प्रजापतिः । [ 10 ]
को हि शक्तो गुणान्वक्तुं देवदेवस्य धीमतः ।
गर्भजन्मजरायुक्तो मर्त्यो मृत्युसमन्वितः ।
को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम् ।
ऋते नारायणात्पुत्र शङ्खचक्रगदाधरात् ।
एष विद्वान्यदुश्रेष्ठो विष्णुः परमदुर्जयः । [ 15 ]
दिव्यचक्षुर्महातेजा वीक्ष्यते योगचक्षुषा ।
रुद्रभक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना ।
तं प्रसाद्य तदा देवं बदर्यां किल भारत ।
अर्थात्प्रियतरत्वं च सर्वलोकेषु वै तदा ।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् । [ 20 ]
पूर्णं वर्षसहस्रं तु तप्तवानेष माधवः ।
प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ।
युगे युगे तु कृष्णेन तोषितो वै महेश्वरः ।
भक्त्या परमया राजन्प्रीतश्चैव महात्मनः ।
ऐश्वर्यं यादृशं तस्य जगद्योनेर्महात्मनः । [ 25 ]
तदयं दृष्टवान्साक्षात्पुत्रार्थे हरिरच्युतः ।
यस्मात्परतरं चैव नान्यं पश्यामि भारत ।
व्याख्यातुं देवदेवस्य शक्तो नामान्यशेषतः ।
एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिं चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप । [ 30 ]

ततः स भगवान्भुक्त्वा दंपती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ॥ २९
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेन्द्रस्तु सपत्नीकः स्थितोऽभवत् ॥ ३०
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ पादौ मे जागर्तव्यं च वां निशि ॥ ३१
अविशङ्कश्च कुशिकस्तथेत्याह स धर्मवित् ।
न प्रबोधयतां तं च तौ तदा रजनीक्षये ॥ ३२
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतावथ दंपती ॥ ३३
ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ ३४
स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः ॥ ३५
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिंचिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ॥ ३६
तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्शितौ ।
भार्यापती मुनिश्रेष्ठो न च ताववलोकयत् ॥ ३७

---

29 D5 om 29 (cf v l 19) D1 om 29 (cf v l 24). D2 om (hapl) 29 — $^{a}$) V1 B Dn D10 तत स भुक्त्वा भगवा(Dn1 °व)न् — D8 repeats 29$^{c}$–30$^{d}$ after 32$^{ab}$ — $^{d}$) D4 6 7 8 (both times) 9 मा बाधत (by transp) T G इह (for इति)

30 For the repetition in D8, cf. v l 29 D5 om. 30 (cf v l 19) D1 om 30 (cf v l 24) — $^{a}$) D2 8 शय्यागत (for °गृह) — T1 om 30$^{c}$–32$^{b}$ — $^{c}$) V1 B (except B1) Dn D10 नरेशस्, G4 नृपेंद्रस् (for नरेन्द्रस्) — $^{d}$) M ततो (for स्थितो)

31 D5 om 31 (cf v l 19) D1 om 31 (cf v l 24) T1 om 31 (cf v l 30) — $^{a}$) V1 om न V1 प्रसुप्यो, Dn1 प्रबाध्यो (for प्रबोध्यो) — $^{b}$) D3–5 6–9 स (for [अ]थ) — $^{c}$) B1 8 समाहितव्यौ, M4 सपादि° (for संवाहि°) V1 B3 4 5 Dn transp पादौ and मे — $^{d}$) V1 B1–3 च वेनिश, D2 तवानिश, D3 च वा निशि, D4 6–9 तथा निशि (for च वा निशि) B5 Dn जागृतव्य च तेनिश

32 D5 om 32 (cf v l 19) D1 om 32 (cf. v l 24) T1 om 32$^{ab}$ (cf v l 30) — $^{a}$) B2 3 अविशंक (for °शङ्कश्) V1 B5 Dn तु (for च) D8 9 अविशश्चैव कुशिकस् — $^{b}$) V1 B Dn M [प्र]वाह (for [आ]ह स) — After 32$^{ab}$, D8 repeats 29$^{c}$–30$^{d}$ D9 om 32$^{c}$–34$^{b}$ — $^{c}$) B1 D2 प्राबोधयता B5 Dn D10 तं (for स) V1 B2–4 D8 न प्राबोधयतां तौ च, D3 corrupt — $^{d}$) V1 B3 4 5 Dn1 ns D10 त तथा, Dn2 दपती (for तौ तदा)

33 D5 om 33 (cf v l 19) D1 om 33 (cf v l 24) D5 om 33 (cf v l 32) D2 om 33$^{a}$–13 53 32$^{d}$ — $^{a}$) B1 यथादेशान्, B4 तथादेशं; D4 6–8 T2 तदा° (for यथा°) D2 4 6 7 तौ, S (except M3) तच् (for तु) V1 य च देश महर्षिस्तु — $^{d}$) S प्रयतौ च (for °ताव्) G2 त प्रति (for दपती)

34 D5 om 34 (cf v l 19) D1 om 34 (cf v l 24) D9 om 34$^{ab}$ (cf. v l 32) D8 om 34 (cf. v l 33) — $^{b}$) D2 स पार्थिव (for नराधिपम्) — $^{c}$) B1 4 सुप्त्वा च (for सुष्वाप) — After 34, T1 ins

323* द्वाविंशेन समुत्थाय निश्चक्राम तपोधन ।

35 D5 om 35 (cf. v l 19) D1 om 35 (cf. v l 24) D8 om 35 (cf v l 33) — $^{c}$) B1 3 D3 4 6–9 10 संहृष्टश्, B4 सतुष्टश् (for त हृष्टश्) S पर्युपास्त सुसहृष्टश् — $^{d}$) B1 तत (for रत)

36 D5 om 36 (cf v l 19) D1 om 36 (cf v l 24) D8 om 36 (cf v l 33) — $^{a}$) M1–3 द्वाविंशे (for भार्गवस्) T1 सुमहृष्ट (for समुत्तस्थौ) T2 3 G1 3 4 भार्गवस्तत उत्तस्थौ — $^{c}$) B3 D10 नकिंचिदु (for अकिं°) B1 D2 च, D1 7 9 [अ]थ (for तु) S नकिंचिदुक्त्वा च (T3 G2 °वक्त्वाय) गृहान् — $^{d}$) T1 2 G M तपोधन, T3 महामुनि (for °तपा).

37 D5 om, 37 (cf v l 19) D1 om 37 (cf v l 24) D8 om 37 (cf v l 33) — $^{a}$) D2 धावतां (for गच्छतां) V1 B1 5 Dn तौ च, T1 ताव (for तौ तु) D1 6–9 त चानुधावतां चौभौ — $^{b}$) D4 6 क्षुभितौ (for क्षुधितौ) S पीडितौ, some MSS -कर्षितौ (for कर्शितौ) — $^{c}$) B3 भार्या पत्नि (for भार्यापती) D2 4 6–9 नरव्याघ्र (for मुनिश्रेष्ठो) — $^{d}$) V1 B Dn D7–9 तावेतौ न, D10 तावुभौ न (for न च ताव्) D2 न च तौ स व्यलोकयत्, S न च तावभ्यवारयत्

तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ततो राजापतत्क्षितौ ॥ ३८

स मुहूर्तं समाश्वस्य सह देव्या महाद्युतिः ।
पुनरन्वेषणे यत्नमकरोत्परमं तदा ॥ ३९

इति श्रीमहाभारते अनुशासनपर्वणि द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

# ५३

युधिष्ठिर उवाच ।
तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।
अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ॥ २

स प्रविश्य पुरीं दीनो नाभ्यभाषत किंचन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥ ३

अथ शून्येन मनसा प्रविवेश गृहं नृपः ।
ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ॥ ४

विस्मितौ तौ तु दृष्ट्वा तं तदाश्चर्यं विचिन्त्य च ।
दर्शनात्तस्य च मुनेर्विश्रान्तौ संबभूवतुः ॥ ५

C. 13 2759
B 13 53 5
K. 13 88 5
M 13 47 5

---

38 D. om 38 (cf v 1 19) D1 om 38 (cf v 1 14) D2 om 38 (cf v 1 33) —a) D8-9 ततस् (for तयोस्) V1 पृच्छतो:, B1 पश्य° (for प्रेक्ष°) —b) Some MSS भार्गवाणां —c) B1 समभूदन्तर्हितो २ नृप

39 D. om 39 (cf v 1 19) D1 om 39 (cf v 1 24) D2 om 39 (cf v 1 33) —a) D1 9 मुहूर्तात् D2 सुमुहूर्तात्समाविश्य, D6 7 स मुहूर्तात्समाश्वास्य, T1 G2 M ततो मुहूर्तमाश्वस्य, T2 3 G1 2 4 ततो मुहूर्तादाश्वास्य —b) D. 4 6-8 M महामतिः, T2 3 G महा (G2 om महा) मुने (for °द्युतिः) —d) D7-9 तत (for तदा) T1 चकार नृपतिस्तदा, T2 3 G M अकरोत्स महीपतिः

Colophon om in D1 2 5 — Parvan name B1-4 Dn3 दानि — Sub-parvan V1 B1-4 Dn D2 4 9 10 दानधर्म — Adhy name V1 B2 4 Dn3 D2 4 6-10 च्यवनकुशिकसंवादः, B1 च्यवनोपाख्यान, B Dn1 n2 कुशिकच्यवनसंवादः, T2 धर्मशास्त्रनिर्णये गोमाहात्म्यप्रकरणे विश्वामित्रपरशुरामचरित्रे भार्गवच्यवनविद्रा — Adhy no (figures, words or both) V1 52 (as in text), D10 56, T1 M 81, T2 2 G1 4 80, G1 83, G2 82

53

1 D5 om 1a-13b (cf v 1 13 52 19) D1 om 1a-32b (cf v 1 13 52 24) D2 om 1a-32b (cf v 1 13 52 33) —c) B3 वा (for च) T2 3 G सु- (for [अ]न्य)

2 D1 2 5 om 2 (cf v 1 1) D2 om (hapl ?) 2-3 —a) D1 6 7 अपादृष्ट्वा (for अदृष्ट्वा स) —b) D3 5 transp सह and भार्यया —d) B2 व्रीलितो, S (except T1) व्रीळितो (for व्रीडितो)

3 D1 2 5 om 3 (cf v 1 1) D2 om 3 (cf v 1 2) —a) D1 6-9 प्रविश्य च (for स प्रविश्य) — T1 om 3rd —c) T3 तदैव

4 D1 2 5 om 4 (cf v 1 1) —b) V1 B Dn2 n3 D6 9 10 प्रविश्य स्व, Dn1 प्राविशत्स्व (for प्रविवेश) D7 10 M1 नृप —c) B3 भवने (marg शयने as in text)

5 D1 3 om 5 (cf v 1 1) —a) M transp दृष्ट्वा and तं V1 B Dn D10 विस्मितौ ताव् (Dn तस्) अपि दृष्ट्वा, T G विस्मितन्तु (T1 तौ तौ) तदा (G3 था) दृष्ट्वा —b) D2 4 6-9 विचिन्त्य ह, T2 3 G प्राचिंतयन, T3 (inf lin) प्रचिंत्य तत् (for विचिन्त्य च) —c) V1 B Dn D10 तु (B1-3 D10 च) तदा (for च मुनेर्) S सदर्शनात्तस्य मुनेर् —d) D7 4 6-9 सश्रान्तौ (for विश्रान्तौ)

6 D1 3 5 om 6 (cf v 1 1) T1 om 6ab —a) D1 8-9 यथास्थाने Dn, च तौ, T2 3 G ततो (for तु

40

यथास्थानं तु तौ स्थित्वा भूयस्तं संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ ६
तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान् ।
न च तौ चक्रतुः किंचिद्विकारं भयशङ्कितौ ॥ ७
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशां पते ।
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥ ८
तथेति तौ प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः ।
न च पर्याप्तमित्याह भार्गवः सुमहातपाः ॥ १०
यदा तौ निर्विकारौ तु लक्षयामास भार्गवः ।
तत उत्थाय सहसा स्नानशालां विवेश ह ।
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ॥ ११
असत्कृत्य तु तत्सर्वं तत्रैवान्तरधीयत ।
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ।
नासूयां चक्रतुस्तौ च दंपती भरतर्षभ ॥ १२
अथ स्नातः स भगवान्सिंहासनगतः प्रभुः ।
दर्शयामास कुशिकं सभार्यं भृगुनन्दनः ॥ १३
संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ १४
आनीयतामिति मुनिस्तं चोवाच नराधिपम् ।
राजा च समुपाजह्रे तदन्नं सह भार्यया ॥ १५

---

तौ ) B1 दृष्ट्वा, S ( T1 om ) गत्वा ( for स्थित्वा ). — $^{b}$ ) T3 G M तत्पादौ ( for भूयस्तं ) T2 तत्पादौ सम वाहतु — $^{c}$ ) Some MSS पार्श्वेण — $^{d}$ ) S सुष्वाप मुनिसत्तम

7 D1 3 5 om 7 ( cf v 1 1 ) — $^{b}$ ) T1 प्राबुध्यत च वीर्यवान्, T2 M सम्प्रबुध्यत ( M1 2 °ध्यात-; M4 °ध्यापि ) वी°, T3 G3 4 समाप्रबुध्यत वी° — T1 om $7^{cd}$. — $^{d}$ ) S ( T1 om ) विचर ( for विकार )

8 D1 3 5 om 8 ( cf v 1 1 ) — $^{b}$ ) D8 महा मुनि ( for विशां पते ) — For 8, S subst

324* अथाह भगवांस्तौ तु प्रतिबुद्धो विशां पते ।
तैलाभ्यङ्गं प्रयच्छेथां स्नातुमिच्छामि पार्थिव ।

[ ( L 1 ) T1 तात ( for तौ तु ) T1 om the post half and the prior half of line 2 — ( L 2 ) T1 भारत ( for पार्थिव ) ]

9 D1 3 5 om 9 ( cf v 1 1 ) T3 partly damaged. — $^{a}$ ) V1 B ( except B1 ) Dn D2 transp तथेति and तौ — $^{b}$ ) Some MSS -कर्षितौ

10 D1 3 5 om 10 ( cf v 1 1 ) — $^{a}$ ) T3 partly damaged D8 om ( hapl ) from सुखासीनम् up to भार्गव° ( in $10^{d}$ ) — $^{b}$ ) B3 उद्यतौ, T1 पादौ तौ ( for वाग्यतौ ) B1 वाग्यतौ समवाहतु, D8 T2 G2 °तौ संबभूवतु ; T3 G1 3 4 वाह्यतौ संबभूवतु — $^{c}$ ) D4 स ( for च ) — $^{d}$ ) M1-3 वाग्यत ( for भार्गव ) T1 स ( for तु )

11 D1 2 3 om 11 ( cf v 1 1 ) T1 om. $11^{ab}$ — $^{a}$ ) D2 तदा ( for यदा ) D4 6 तौ ( for तु ) — $^{b}$ ) B4 भारत ( for भार्गव ) — $^{d}$ ) S उपागत ( for विवेश ह ) — $^{e}$ ) D4 6-8 क्षिप्रम्, D10 कृतम्, G3 क्षिप्तम् ( for क्लृप्तम् ) — $^{f}$ ) D7 4 6-9 पानीय ( for स्ना° ) D10 पार्थिवोदित

12 D1 2 5 om 12 ( cf v 1 1 ) T1 om $12^{a}$ — $^{a}$ ) V1 B ( except B1 ) Dn D9 च ( for तु ) D10 T2 3 G अस्वीकृत्य च तत्स( T2 3 G1 तत स )र्वं — T1 om $12^{d}$ — $^{d}$ ) T3 M पार्श्वतस् ( for पश्य° ) — $^{e}$ ) B1 2 D4 S तु ( for च )

13 D1 2 om 13, D4 om $13^{ab}$ ( for all, cf v 1 1) — $^{a}$ ) T2 स्नात ( for अथ ) — T1 om $13^{cd}$ — $^{d}$ ) V1 B Dn D2 7.10 G2 सभार्यं कुरुनदन

14 D1 3 om 14 ( cf v 1 1 ) — $^{a}$ ) D1 6 9 स ( for सं ) D7 स हृष्ट कुशिको राजा, T1 ददर्श राजा संहृष्ट — $^{b}$ ) B1 D4-8 8 M1 मुने ( for मुनिम् ) D7 सभार्यश्च वदतो मुने ( hypermetric ), T1 सहासनगत मुनिं — $^{c}$ ) V1 B1 4 5 Dn3 ( marg ) प्राज्ञो ( for प्रह्वो )

15 D1 3 om 15 ( cf v 1 1 ) T1 om 15-18 — $^{b}$ ) V1 तथोवाच, B1 तदो°, D4 6-9 तं प्रो°, D10 तत्रो° ( for त चो° ) D1 6 S ( T1 om ) जनाधिपं ( M1 4 °प ) ( for नरा° ) — $^{c}$ ) V1 B2-5 Dn D2 5-7 10 स राजा ( for राजा च ) B1 समुपाचक्रे ( for °जह्रे ) — $^{d}$ ) D10 S ( T1 om ) तदन्नं भार्यया सह ( M4 also

मांसप्रकारान्विविधाञ्शाकानि विविधानि च ।
वेसवारविकारांश्च पानकानि लघूनि च ॥ १६
रसालापूपकांश्चित्रान्मोदकानथ षाडवान् ।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ १७
फलानि च विचित्राणि तथा भोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातकवटानि च ॥ १८
गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ १९
अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्वं समानीय तच्च शय्यासनं मुनिः ॥ २०
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ २१
न च तौ चक्रतुः कोपं दंपती सुमहाव्रतौ ।
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ २२
तत्रैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतः श्रीमान्न च तं कोप आविशत् ॥ २३
नित्यं संस्कृतमन्नं तु विविधं राजवेश्मनि ।
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥ २४
वस्त्रं च विविधाकारमभवत्समुपार्जितम् ।
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा ॥ २५

C. 13 2787
B. 13 53 26
K. 13 88 26
M 13 47 26

मुनि )

16 D1 2 om 16 (cf v 1 1) T1 om 16 (cf v 1 15) —b) D1-2 शाकांश्च विविधान्मुने —Dn1 om (hapl) 16cd —c) B Dn2 D3 वेस(D3 °ष)-वार, Dn S (T1 om) स्नावित्र (for वेसवार) —d) T2 3 G पानान्यपि (for पानकानि) D3 पानकान्यलघून्यपि, D3 वन्यं च मुनिभोजन (= 17d)

17 D1 2 om 17 (cf v 1 1) T1 om 17 (cf v 1 15) G1 partly damaged. T3 reads 17ab twice —a) D रसालापूपकांश्च T• (both times) 2 G1 3 4 M रसान्धं सूपकांश्चित्रान् —b) V1 षाडवान् B1 3 Dn T• (both times) 2 G पट्टकान, B1 लड्डुकान, B1 पाकुण्ड, Dn1 n2 D ष्याडवान, Dn2 (marg) D1 6-7 मस्तकान (for षाडवान) —c) D1-2 विकारान् (for प्र) —d) D om भोजनम् D3 पानकानि लघूनि च (= 16d)

18 D1 2 om 18 (cf v 1 1) T1 om 18 (cf v 1 15) Dn2 om up to तथा (in 18b) —b) V1 Dn1 n2 D3 10 G• सन (for तथा) V1 भोग्यानि (for भोज्यानि) — D1 • om 18c-19b —c) T2 3 G1 2 4 M काश्मर्य (for काश्मर्यं) —d) V1 B Dn D3 10 T2 G1 2 4 फलानि (for वटानि)

19 D1 2 om 19 (cf v 1 1) D1 6 om 19ab (cf v 1 16) —a) B2 3 यद्रव्य, S सभोज्य (for यद्भोज्य) —d) V1 B Dn तत्र (for मुने)

20 D1 2 om 20 (cf v 1 1) T1 om 20ab —c) D1 6-9 सर्वान (for सर्वं) D3 T1 समानाय्य (for नीय) —d) D3 तथा, T1 यद्य (for तच्च)

21 D1 2 om 21 (cf v 1 1) —a) T1 2 G1 • 4 M शुभैर्, T2 शुभ्रैर् (for शुभैर्) D2 समाच्छाद्य (for अव°)

22 D1 2 om 22 (cf v 1 1) —a) V1 B2-• Dn D2 10 M• क्रोध, B1 पाप (for कोप) —b) B2 partly damaged D3 तौ (for तु) V1 B (except B1) Dn D6 महामती (for °व्रतौ) —c) B1 च पश्यतः (for संप्रेक्ष) D2 एव (for एव) D3 तयो प्रवीक्षतोरेक —d) D1 6 तत्रैव (for पुनर्)

23 D1 2 om 23 (cf v 1 1) —a) V1 B1 2 4 6 Dn D2 तथा, B2 अथ (for तत्र) D3 om च —b) Dn1 तथा (for तस्थौ) — T1 om 23c-25b —c) B1 धीमान (for श्री) —d) D2 ते, T2 [ए]व, T3 G2 [ण]र (for त) V1 B Dn• n2 D10 न च कोप (B2 3 रोप) समाविशत्

24 D1 2 cm 24 (cf v 1 1) T1 om 24 (cf v 1 23) —a) V1 B Dn• n2 D 4 7-10 नित्य- (for नित्यं) —b) D2 4 6-9 विविधद् (for विविधं) —c) D1 7 8 पुण्यानि (for मुख्यानि) —d) D6 निष्फला (for पु°) D2 M परिषेकश्च पुष्कल, D6 षेकाश्च पुष्कलान

25 D1 2 om 25 (cf v 1 1) T1 om 25ab (cf v 1. 23) —c) T2 तदा (for ततो) —d) B2 D3 तथा (for तदा)

26 D1 2 om 26 (cf v 1 1) —b) D6-9 T1 नृप (for नृपम्) —c) S (except T1 2) मा (for

पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ २६
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ।
क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः ॥ २७
इत्युक्तः स मुनिस्तेन राज्ञा हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् ॥ २८
सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको मतः ।
सायुधः सपताकश्च सशक्तिः कणयष्टिमान् ॥ २९
किङ्किणीशतनिर्घोषो युक्तस्तोमरकल्पनैः ।
गदाखड्गनिबद्धश्च परमेषुशतान्वितः ॥ ३०
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ३१
त्रिदंष्ट्रं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ३२
भगवन्क्व रथो यातु ब्रवीतु भृगुनन्दनः ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ३३
एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम् ।
इतःप्रभृति यातव्यं पदकं पदकं शनैः ॥ ३४
श्रमो मम यथा न स्यात्तथा मे छन्दचारिणौ ।
सुखं चैवास्मि वोढव्यो जनः सर्वश्च पश्यतु ॥ ३५
नोत्सार्यः पथिकः कश्चित्तेभ्यो दास्याम्यहं वसु ।
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ॥ ३६

---

मा ) — $^{d}$ ) G वाहयात्र ( for वह यत्र )

27 D1 8 om 27 ( cf v l. 1 ) — $^{c}$ ) V1 B2-4 [s]स्ति ( for ऽस्तु ) — $^{d}$ ) V1 अति, P1 3 न तु, D1 8 अथ ( for उत )

28 D1 8 om 28 ( cf v l 1 ) Dn1 T1 om ( hapl ? ) $28^{a}$–$29^{b}$ — $^{ab}$ ) T8 G तु ( for स ) G1 ततस् ; M ऋषिस् ( for मुनिस् ) V1 B ( except B1 ) Dn2 n3 D10 transp तेन and राज्ञा — $^{c}$ ) D1 0 त वच , D7-0 न वच ( for च्यवन ) D1 [इ]ह ( for [इ]दं ) — $^{d}$ ) T2 G3-4 इष्ट D1-10 M परपुरजय ( D7 9 °य )

29 D1 8 om 29 ( cf v l 1 ) Dn1 T1 om $29^{ab}$ ( cf v l 28 ) B8 om $29^{ab}$ — $^{b}$ ) B1 4 Dn2 n3 ( marg as in text ) D1-9 G3 ( before corr as in text ) + रथ ( for मत ) — $^{c}$ ) D2 सायुधा सपताकाश्च — $^{d}$ ) B1 D2 -शक्तिकण , B2 8 शक्तितूण , D1-0 -शक्तिध्वज ( for शक्ति कण ) V1 B5 Dn D10 शक्तीकनक( V1 B5 °कणप , Dn8 °कणय )यष्टिमान्, B1 सशक्तिक सपाष्णिमान , T1 तमानय नृपोत्तम, T2 स्व शक्तिकृतयष्टिक ; T3 G सशक्ति कृतयष्टिक

30 D1 3 om 30 ( of v l 1 ) T1 om 30 — $^{a}$ ) V1 B2-5 Dn D1 9 स्वन , T2 3 G कृत ( for -शत ) B1 किंकिणीजालनिर्घोषैर् — $^{b}$ ) D3 5 युतस् ( for युक्तस् ) B1 4 5 Dn1 n2 n3 ( marg as in text ) तोरण ( for तोमर ) D1 कपनै , S ( T1 om ) -कर्षणै ( for कल्पनै ) V1 B1 युक्तस्तोरणकपने , D4 6 8 9 युतस्तोमरकपनै , D10 पुरस्तोमरकर्षणै — $^{c}$ ) V1 B ( except B1 ) Dn जाम्बूनद ( for गदाखड्ग ) D4, 6-9 -पिनद्धस्तु ( D6 °श्च ) ( for निबद्धश्च )

31 D1 8 om 31 ( cf v.l 1 ) — $^{c}$ ) G1 partly damaged B1 D1 6 तथा ( for तदा ) — $^{d}$ ) D3 चात्मान, D3 6 10 G3 आत्मान. T3 8 G तदा ( for तथा )

32 D1 8 om $32^{ab}$(cf v l 1) — $^{a}$ ) V1 Dn1 n3 D4 8 10 त्रिदण्ड ( for °ष्ट्रं ) — $^{b}$ ) D6 7 9 [अ]दधात्. — T1 om $32^{cd}$ — $^{c}$ ) B4 एव ( for एतत् ) Dn3 D8 तथा ( for ततो ). — $^{d}$ ) D5 नृपतिर्वाक्यमब्रवीत्

33 $^{d}$ ) T1 तथा ( for तत्र )

34 $^{a}$ ) B1 T G स ( for तु ) — $^{b}$ ) D1 6-9 प्रत्युवाच नृप तदा

35 T1 om $35^{ab}$ — $^{a}$ ) D5 मह्य ( for मम ) — $^{b}$ ) B5 मे ह्यद्द , Dn1 n3 मच्छन्द-, D1 स्वच्छन्द- ( for मे छन्द ) D1 2 T2 M यथा मच्छन्दचारिणा ( D1 T2 M1 °णा ), D3 5-10 T3 G तथा स्वच्छन्दचारिण ( D7 8 णा ) — $^{c}$ ) G2 तैर् ( for चैव ) V1 B Dn सुसुखं चैव वोढव्यो — $^{d}$ ) D8 सर्वे प्र , G4 सर्वत्र ( for °श्च ) D5 सर्वजनस्य पश्यत

36 $^{a}$ ) D7 om पथिक Dn1 n3 नोत्सार्या पथिका केचित्, D6 T1 8 G °र्यं पथि कश्चिच्च ( D6 °श्चित्ते, G1 °श्चापि ) — $^{b}$ ) V1 B Dn तेभ्यो दास्ये वसु ह्यह, S वसु दास्यामि तेऽप्यह — T1 om $36^{cd}$ — $^{c}$ ) S ( T1 om ) ब्राह्मणाश्चैव ये कामान् — $^{d}$ ) B1 अर्चयिष्यति, D7 9 अर्प ( for अर्थ° ). D3 T3 G1 3 मा ( for मां )

सर्वं दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचार्य पार्थिव ॥ ३७
तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ ३८
ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ ३९
अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत्सर्वमासीन्नगरमार्तिमत् ॥ ४०
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रचोदितौ ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ ४१
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथंचिदूहतुर्वीरौ दंपती तं रथोत्तमम् ॥ ४२
बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ ४३
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकपरायणः ।
अभिशापभयात्त्रस्तो न च किंचिदुवाच ह ॥ ४४
द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः ॥ ४५
अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ॥ ४६

C. 13 2801
B 13 53 47
K. 13 53 47
M 13 47 47

---

37 ᵃ) V1 B3.4.5 Dn D10 सवान् (for सर्वं) — ᵇ) G3-4 धन (for धनं) D1.2 M ह (for हि)

38 ᵃ) D1- राजा (for श्रुत्वा) — ᵇ) D1-6 सर्वान्, D-- ततो (for राजा) Dn D3 तथा (for अथ) T G राजामात्यान्नथाब्रवीत् — Dn1 om 38ᶜ–39ᵇ — ᶜ) D- येत्तद् (for यद्यद्) D1-3 तच, D3 T1 G2 तत्र (for तत्तत्) — ᵈ) D1-2 स्वकया (for अशङ्कितैः)

39 Dn1 om 39ᵃᵇ (cf. v. l. 38) — ᵃ) D1 6-9 धन (for ततो) — ᵇ) V1 गोरथम्, B1 युग्मम् (for युग्यम्)

40 ᵃ) B1.5 D1.5 अनुगच्छन्त, D1 6 8 अन्व(D1 °नु)गच्छत D. om from नृपं up to वेपमानौ (in 42ᵃ) — ᵇ) D1-8 यानयुग्यं (for राजामात्याश्च) D1 om च — T1 om 40ᶜᵈ — ᶜ) D3 नगरम् (for तत्सर्वम्) — ᵈ) D2 तत्सर्वम् (for नगरम्) V1 B Dn D10 आर्तवत् (for आर्तिमत्)

41 D. om 41 (cf. v. l. 40) — ᵃ) B1 तौ तु तीक्ष्णाग्रेण तदा — ᵇ) V1 B Dn D1-8.10 प्रतोदितौ (for प्रचो°) — ᶜ) B1 च तौ चैव, D1.2 M1-3 कटौ चैव, D1-- च कटे च (for कटे चैव) — ᵈ) Dn2 समूहतु

42 D2 om वेपमानौ (cf. v. l. 40) — ᵇ) B1 D2 1-3 T1 G2 रात्रि (for रात्र) Some MSS कर्षितौ — ᶜ) S धैर्यात् (for वीरौ) — ᵈ) B1 Dn1 D1- 1-3 T2 तौ, M तद् (for तं)

43 T1 om 43 — ᵃ) B1 बहुशोऽगेषु (for °शो भृश) D2 om, D1 9 तु (for तौ) — ᵇ) V1 B -- Dn D1 10 स्रवतौ च (for क्षरमाणौ) B1 स्यन्दमानक्षतोद्भवौ

44 ᵃ) D2 च (for तु) — ᵇ) G1 2 4 कोप (for शोक) V1 B Dn समाकुल (for परायण) — ᶜ) B2 3 प्रति, Dn2 T1 अपि, D10 इति (for अभि) B1 - Dn1 n3 D- - T1 2 G1 3 M1 भयत्रस्तो, G1 भयत्रस्तो (for -भयात्त्रस्तो) — ᵈ) V1 B1-3 स, B1 D10 S (except T1) त, D1-3 [प]न, D1-7 [प]त्र (for च)

45 ᵇ) M1 तपसो (for °सो) — ᵈ) V1 B Dn D10 [इ]ह (for [ए]व) — V1 B in after 45 B 3 after 47 B1 after 46ᵃᵇ

325* ब्राह्मणा एव जायेरन्नान्यो वर्णः कथंचन ।
ईदृशं रथमारुह्य कोऽन्यो जीवितुमुत्सहेत ।

[ (L 1) B3 कथंचन (for कथंचन) — (L 2) B3 भवितुम् (for जी°) ]

46 ᵃ) M1-2 अयो (for अहो) T1 तव महा (for भगवतो) M- रूप (for वीर्यं) — After 46ᵃᵇ, B1 ins 325* B1 D2 om 46ᶜ–47ᵈ — ᶜ) B1 D1 3-7 9 T G1 3 4 [स]स्य (for [अ]पि)

47 B1 D2 om 47 (cf. v. l. 46) — ᵃ) B1 D7 ह, D5 10 M च, T2 3 G तु (for हि) — ᵇ) B. Dn2 D- 9 तन, T- 3 G1 2 4 एक (for एव) G2 [अ]घरधर्म समूहतु (sic) — ᶜ) V1 B. D1 2 वा (for च) B2 विकाराद् (for °र) B1 M स, B3 चैर्, D2-6 8 हि (for वै) — After 47, B2 3 ins 325*

श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ४७

भीष्म उवाच ।

ततः स निर्विकारौ तौ दृष्ट्वा भृगुकुलोद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ४८
तत्रापि राजा प्रीतात्मा यथाज्ञप्तमथाकरोत् ।
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ॥ ४९
अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ ५०
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया ।
ददानि वां वरं श्रेष्ठं तद्ब्रूतामिति भारत ॥ ५१
सुकुमारौ च तौ विद्वान्कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ५२
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेति भार्गव ॥ ५३
अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा ।
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ५४
रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् ।
कंचित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ५५
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ ५६
न च मन्युस्त्वया कार्यः श्रेयस्ते समुपस्थितम् ।
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं संभविष्यति ॥ ५७
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥ ५८
न मे मन्युर्महाभाग पूतोऽस्मि भगवंस्त्वया ।

---

48 T1 om 48ᵃ–49ᵇ (with the ref) D1–7 9 om the ref —ᵃ) T3 G1 3 तु (for स) V1 om, Dn D1 3 6–8 M1–3 तु (for तौ) D10 ततो मुनिर्निर्विकारौ, G3 निर्विकारौ मुनिस्तौ तु —ᵇ) D4 7 9 कुरु- (for भृगु) B1 कुलोद्भव, Dn1 D8 °द्वह T2 3 G1 3 4 मुनिर्दृष्ट्वा भृगूद्वह — D1 6 7 9 om (hapl) 48ᶜ–50ᵈ —ᶜ) Dn1 बहु (for वसु) —ᵈ) T3 यदा वैश्रवणस्तदा

49 D4 6 7 9 om 49, T1 om 49ᵃᵇ (for all, cf v l. 48) —ᵃ) B1 4 D5 तथा (for तत्र) —ᵇ) V1 Dn यथादिष्टम्; B6 यथादृष्टम् (for यथाज्ञप्तम्) B5 तथाकरोत्, D1 2 5 उपा° (for अथा°) —ᵈ) D5 बभूव भृगुनंदन

50 D4 6 7 9 om 50 (cf v l 48) —ᵃ) D1–2 5 रथोपस्थाद्, M1–3 रथाच्छ्रेष्ठाद् (for रथश्रे°) — T1 om (hapl) 50ᶜᵈ —ᶜ) V1 B (except B5) D1–3 विमुच्य (for विमोच्य) D2 चैनौ, D4 चैतां (for चैतौ) T2 विमोचमानौ विधिवत्

51 ᵃ) D5 ततो (for स्निग्ध) —ᵇ) T1 समा भाव्य (for भार्गव सु) — T1 om 51ᶜᵈ —ᶜ) B1 D4–10 G2 ददामि (for °नि) —ᵈ) V1 B2 5 Dn D9 T2 M त भृताम्, B4 D2 तद्भृतम् (for तद्ब्रूताम्)

52 ᵃ) V1 B Dn D10 विद्वौ (for विद्वान्) T1 सुसमालोक्य तौ विद्वौ —ᵈ) S स स्नेहाद्भरतर्षभ

53 T1 om 53ᶜᵈ —ᶜ) V1 B3 4 5 Dn D5 च (for स्व) —ᵈ) D4 6–9 M4 [अ]वैहि, D5 चेति; G4 [ए]वेह (for [ए]वेति) V1 B Dn D10 ऊचतुस्तौ तु भार्गव, T2 3 G1–3 ध्यानेनैवेह भारत

54 ᵃ) D8 भार्गव (for भगवान्) —ᵇ) V1 G4 तथा (for तदा) —ᶜ) D1–3 अवृथा; D4 6–9 अन्यथा (for न वृथा) M4 व्याहृत D6 om from पूर्वं up to व्रत (in 55ᶜ)

55 D6 om up to व्रत (in 55ᶜ) (cf v l 54) —ᵃ) S [s]यमुद्देशो (for समु°) D1 2 4 5 7–9 रम णीयं व(D1 2 °यत्र)नोद्देश, D3 णीये वनोद्देशे — T1 om. 55ᶜᵈ —ᵇ) T2 3 G4 इम (for इद) —ᶜ) V1 B4 Dn D1 4 5 7–10 G1 3 किंचित् (for कं°) D1–3 व्रतधरो (for °परो) —ᵈ) D3 निवसामि (for °त्स्यामि) M च (for [इ]ह)

56 ᵃ) B1 स्व पुर, T2 स्वगृहं (for स्वपुर) D10 T2 G तत्र, T1 शीघ्र (for पुत्र) —ᶜ) D2 मा (for मा) —ᵈ) D8 नृपोत्तम (for नराधिप)

57 ᵃ) V1 वा (for च) —ᵇ) S (except T1) त्वां (for ते) —ᵈ) D1. 2 4 6–9 transp तत् and सर्वं V1 B2–5 Dn D10 हि, B1 ते (for स-)

59 ᵃ) D4 10 transp मे and मन्युर् —ᵇ) V1 B2–5 Dn पूतौ स्वो, B1 प्रीतौ स्वो, D4 6–9 पूजितो,

संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ५९
प्रतोदेन व्रणा ये मे सभार्यस्य कृतास्त्वया ।
तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्यया ॥ ६०
इमां च देवीं पश्यामि मुने दिव्याप्सरोपमाम् ।
श्रिया परमया युक्तां यथादृष्टां मया पुरा ॥ ६१
तव प्रसादात्संवृत्तमिदं सर्वं महामुने ।
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ॥ ६२
इत्युक्तः प्रत्युवाचेदं च्यवनः कुशिकं तदा ।
आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ॥ ६३
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् ।
प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ६४
तत एनमुपाजग्मुरमात्याः सपुरोहिताः ।
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ॥ ६५
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ॥ ६६
ततः प्रविश्य नगरं कृत्वा सर्वाह्निकक्रियाः ।
भुक्त्वा सभार्यो रजनीमुवास स महीपतिः ॥ ६७

ततस्तु तौ नवमभिवीक्ष्य यौवनं
परस्परं विगतजराविवामरौ ।
ननन्दतुः शयनगतौ वपुर्धरौ
श्रिया युतौ द्विजवरदत्तया तया ॥ ६८
स चाप्यृषिर्भृगुकुलकीर्तिवर्धन-
स्तपोधनो वनमभिराममृद्धिमत् ।
मनीषया बहुविधरत्नभूषितं
ससर्ज यन्नास्ति शतक्रतोरपि ॥ ६९

C 13 2824
B 13 53 69
K 13 58 70
M 13 47 70

इति श्रीमहाभारते अनुशासनपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

D5 तुष्टोऽस्मि, D10 प्रीतोऽस्मि (for पूतोऽस्मि) — c) D1-2 द्वौ, D7 T1 च, D3 नु (for स्वो) D4 सप्रवृत्तौ यौवनस्थौ — d) D5 6-8 आयुष्मन्तौ (for वपु॰)

60 b) V1 B Dn D5 10 त्वया कृता (by transp), D4.6 कृता मया — D2 om (hapl) 60cd — d) D5 6-8 स्वस्थोऽस्मि विगतज्वर

61 b) V1 B Dn D10 वपुषाप्सरसोपमा, D1-3 मुने दिव्याप्सरःसमा — c) B1 Dn1 n3 D2 युक्ता (for युक्तां) — d) D3 transp मया and पुरा V1 B Dn D10 यथा दृष्टा पुरा मया, D1-3 यथा दृष्टा मयैव च, T1 यथा दृष्ट महत्तप, T2 3 G M यथा दृष्ट्वा (M1 कृत्वा) महत्तप

62 T1 om. 62ab — a) D1-9 तवप्रसादात्, T2 3 G2 4 तत्त्वत्प्र (for तव प्र॰) V1 B (except B1) Dn1 n2 D1 तव प्रसादसंवृत्तम्, G1 त्वत्प्रसादात्सवृत्तम् — c) B1 हि (for तु) — d) D10 T G2-4 -पराक्रमे

63 a) V1 B Dn D10 [प्]न (for [इ]द) — b) D1 कश्यप (for कुशिक) V1 B Dn D10 कुशिक च्यवन-स्तदा (B1-2 ॰था) — c) B1 D1-3 त्वम् (for च) — d) D1-9 इहेति सो (D2 ॰ति च), T1 इहैव तु (for त्वमिहेति) B1 इहेति च नराधिप

64 b) D5 S (except T1) च (for तम्) — c) D4 वै श्रिया, D6-8 च श्रिया- (for वपुषा) — d) D4 नगरे D5 चैव (for देव)

65 a) D5 पुनर् (for एनम्) D1-4 6-8 तत पुन समाजग्मुर् — T1 om 65cd — c) T2 3 G क्षत्रिया, M नायका (for गणिका) D1.6-8 बलकायस्थगणका, D5 बलकृता सगणिका — d) D3 G4 तदा (for तथा)

66 a) Partial lacuna in D5 D6 संवृत्त (for तैर्वृत) T2 सर्वतो (for कुशिको) D1 6 7 8 राजन् (for राजा) — T1 om 66bc — b) V1 D10 युत (for ज्वलन्) — c) B6 पुरीं (for पुरं) — d) D1 6 7 T1 2 स्तूयमानोथ (T1 ॰नश्च) बन्दिभि

67 b) V1 B3 5 6 Dn3 पूर्वाह्निकी, B1 4 T2 3 G1 3 4 सर्वाह्निका (B4 ॰की), Dn1 n2 D10 पौर्वाह्निकी (for सर्वाह्निक) D1-3 5 T1 G2 4 कृतसर्वाह्निकक्रिय, D4 6-8 कृतपूर्वाह्निकक्रिय — d) V1 B Dn D10 महाद्यु (B1 ॰न)ति (for महीपति)

68 a) Dn1 ततो (for तु तौ) D5 प्रसमीक्ष्य (for नवमभिवीक्ष्य) — b) T2 परस्परौ V1 B Dn दृष्ट्वा

## ५४

भीष्म उवाच ।
ततः स राजा राज्यन्ते प्रतिबुद्धो महामनाः ।
कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति ॥ १
ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ।
तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा ॥ २
पर्वतान्रम्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधास्तोरणानि च भारत ।
शाद्वलोपचितां भूमिं तथा काञ्चनकुट्टिमाम् ॥ ३
सहकारान्प्रफुल्लांश्च केतकोद्दालकान्धवान् ।
अशोकान्मुचुकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ॥ ४
चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि ।
पुष्पितान्कर्णिकारांश्च तत्र तत्र ददर्श ह ॥ ५
श्यामां वारणपुष्पीं च तथाष्टापदिकां लताम् ।

---

(for जराव्) —$^c$) T 3 G1 3 4 सदन (for शयन). —$^d$) Dn3 [अ]न्वितौ, D1-3 6-9 वृतौ (for युतौ) Dn1 n2 G2 तदा (for तया)

69 $^a$) V1 B Dn D6 10 अथ (for स च) —$^d$) V1 यत्र#*, B1-3 Dn यत्र पुरि, B4 यत्र भुवि, D5 वै नास्ति (for यत्रास्ति)

Colophon — *Parvan name* B1-4 Dn2 D1 3 शांति — *Sub parvan* V1 B Dn1 n2 D1 2 7 M1 3 4 दानधर्म — *Adhy name* V1 B1 2 4 5 Dn D1-4 6-10 T3 G2 च्यवनकुशिकसंवाद, T2 धर्मनिर्णये कुशिकच्यवनसंवादे च्यवनशुश्रूषाया कुशिकवरप्राप्ति, G1 3 कुशिकच्यवनसंवाद — *Adhy no* (figures, words or both) V1 53 (as in text), D5 50, D10 57, T1 M 82, T2 3 G1 4 89, G3 83 — *Śloka no* D4 66

### 54

1 $^b$) D1 प्रवि (for प्रति) D3 जनाधिप, D10 महातपा (for °मना) —$^c$) D1 2 7 9 पौर्वाह्णि(D3 °ह्णि)क, S सर्वाह्णि(T2 G2 °ह्णि)क, some MSS -पूर्वाह्णिक (for पूर्वाह्णिक)

2 D5 reads 2-3 after 14$^a$ —$^a$) D6 स तत्रैव मनोरम्य —$^b$) B1 तत्र (for सर्व) —$^f$) T2 G2 4 तथा (for तदा)

3 For the sequence in D5, cf v 1 2 —$^a$) V1 Dn1 n2 रम्यसानूश्च, Dn3 रत्न°, D5 रम्यशृङ्गाश्च (for °सानूंश्च) —$^b$) D5 नलिन्यश्च, S नलिनीश्च (for नलि°) D1 6-9 फुल्ल, G1 च सु- (for च स) —$^d$) D1 ह (for च) — T1 om 3$^{ef}$ —$^e$) D1-9 शाड्वलोपचिता, T2 3 M शाड्वलोपहितां, G शाड्वलावहिता (for शाद्वलोपचिता) —$^f$) D5 7 9 कुट्टिमैं, G4 मृत्तिका (for -कुट्टिमाम्)

4 D6 om 4$^a$-5$^b$ —$^a$) G4 पुष्पितांश्च (for सहकारान्) T1 च विपुलान् (for प्रफुल्लांश्च) — D1-4 6-9 om (hapl) 4$^{bc}$ —$^b$) Dn2 वरान्, T1 अपि (for धवान्) V1 केतकोद्दालिकान्धवान्, B4 °स्पलिकान्धवान्, G1 3 °द्दालकालवान्, M4 °द्दालकान्धवान् —$^c$) B3 Dn1 n2 सह कुटाश्च, T1 पिचुमर्दांश्च, M मुचुलिं(M2 °लिं)दाश्च (for °कुन्दांश्च) —$^d$) T1 मल्लांश्च (for फुल्लाश्च) B1 [अ]भि (for [अ]ति)

5 D5 om 5$^{ab}$ (cf v 1 4) —$^a$) D1 6-9 पनसान् (for तिलकान्) B4 D10 शालान, S सर्जान् (for भव्यान्) —$^b$) V1 D10 वकुलान (for वञ्जुलान्) D1 6-9 तिलकानर्जुनानपि, T1 असनार्जुनका°, T2 3 G M असनानर्जुना° —$^c$) B5 पुष्पितान्कर्णिकाश्चैव, D5 श्यामान्सुपुष्पितान्वृक्षास्

6 T1 om 6-7 —$^a$) M2 श्यामान् (for श्यामा) M1-3 वारण (for वारण-) D5 T3 पुष्पा (for पुष्पीं) V1 B Dn D1-5 श्यामान्वारणपुष्पां(D5 °मुख्या)श्च, D10 श्यामाश्चारणपुष्पाश्च, T2 G श्यामा चारणपुष्पा च —$^b$) D1 5 T3 [अ]ष्टापद(T2 °ति)का, D7-9 [अ]ष्टपदकां (for [अ]ष्टापदिका) V1 B. Dn तथाष्टपदिका लता, B1-4 D1-3 10 तथाष्टापदिका लता, D. °कानथ —$^c$) D1-3 तदाश्लि(D2 3 °श्लि)ष्टा, D4 परिश्लिष्टा, D5 10 T2 3 G °श्लिष्टा, D6-9 श्लिष्टा (for °कृता) M तत्राश्रम परिश्लिस —$^d$) D5 स ददर्श (by transp.)

तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः ॥ ६
वृक्षान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा ।
विमानच्छन्दकांश्चापि प्रासादान्पद्मसंनिभान् ॥ ७
शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रवराणि च ॥ ८
पर्यङ्कान्सर्वसौवर्णान्परार्ध्यास्तरणास्तृतान् ।
भक्ष्यभोज्यमनन्तं च तत्र तत्रोपकल्पितम् ॥ ९
वाणीवादाञ्शुकांश्चापि शारिकाभृङ्गराजकान् ।
कोकिलाञ्शतपत्रांश्च कोयष्टिमकुक्कुटान् ॥ १०
मयूरान्कुक्कुटांश्चापि पुत्रकाञ्जीवजीवकान् ।
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान् ॥ ११
समन्ततः प्रणदितान्ददर्श सुमनोहरान् ।
क्वचिदप्सरसां संघान्गन्धर्वाणां च पार्थिव ॥ १२
कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ।
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः ॥ १३
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसान्सुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ १४
तं दृष्ट्वात्यद्भुतं राजा मनसाचिन्तयत्तदा ।
स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ॥ १५
अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् ।

C 13 2841
B 13 54 16
K 13 89 16
M 13 47 86

---

7 T1 om 7 (cf v 1 6) — a) B3m ed रत्यान् (for वृक्षान्) D3 रम्यान्, D1 2 धरान् (for -धरान्) D- पद्मोत्पलवराश्चैव — b) D3 अपि (for तथा) — c) V1 B Dn D5 8-10 प्रतिमाश्च, D- मदशाम् (for -च्छन्द कान्) T1 2 G विमान चन्द्रिकाश्चापि — d) V1 B2-5 Dn D10 शैल, B1 अद्रि- (for पद्म) D5 6-8 प्रासा दान्सर्वकाञ्चनान्

8 a) Some Southern MSS शीतलानि — c) M च (for वि) — d) Dn1 n2 D7 8 शयन (for °न-) S प्रस्तराणि (for -प्रव) B3 (marg as in text) तेषा प्रावरणानि च

9 a) V1 B3 4 . Dn D2 रत्न (for सर्व) — b) V1 B1 . Dn D1-3 G3 परार्ध्यास्तरणावृतान्, T1 णान्वि तान्, T2 °णानि च — c) Dn2 D3 M1 2 4 भक्ष्य (for भक्ष्य) — d) B1 कल्पितान् (for °तम्)

10 a) B1 2 4 वीणावादाम् (B1 °द), D4-9 वाणी- वराम्, D10 तालपादाम्, T1 वारिवाहान्, T2 8 G पाणिवाहाम्, M पाणिवहान् (for वाणीवादान्) V1 B (except B1) Dn D5 चैव, D1 6 वापि (for चापि) — b) D1 4 सारिका-, D7-9 सायकान (D8 का), D10 कपोतान् (for शारिका) B1 राजिकान् (for -राज) V1 D5 T3 सारिकान्भृगराजिकान् — T1 om (hapl ?) 10cd — d) Dn1 कोयष्टिमहि, D1-3 °जल-, T2 8 G °ममि, M1 °मद्द, Madras ed °मणि (for मक) V1 B5 Dn2 n3 सकोयष्टिककुक्कुभान्, B1-4 D10 कोयष्टि- बक (B1 °चक्र) कुक्कुभा (B5 टा) न्, D1-3 टीनय कुर्कुटान

11 D1 2-3 (hapl ?) om 11ab — a) D1 कुर्कुटाश्च, T1 कुकुराश्च, T2 8 G M1-3 कुरराश्च (for कुक्कुटांश्च) B1 [पु]त्र (for [श्चा]पि) D- मधुराराावककुभान् — b) V1 B Dn D10 दात्यूहान् (for पुत्रकान्) D3 om (hapl) जीव G2 जीविकान् D पुत्रजीवकजीविकान् — T1 om (hapl ?) 11cd — c) B1 4 वायसान्, D5 जलजान् (for वानरान्) — d) D1 5 चक्रकाह्वयान् (for चक्रसा) T2 चक्रवाकसमाहृतान्

12 a) V1 B3 (marg) 4 . Dn D10 प्रमुदितान्, B1 समुदि°, B2 5 परिवृ°, S प्रणदतो (for °दितान्) — D6 om (hapl ?) 12b–13a — b) B1 3 G3 स (for सु) — c) D5 T2 8 G अप्सरस (for रसा) D1 2-3 सर्वत्र (for संघान्) — d) V1 B1-3 M पार्थिव, D1 7-9 सर्वश, T1 भारत (for पार्थिव)

13 D6 om 13ab (cf v 1 12) — a) T2 G1 3 4 ताम्रामिर्, G2 ज्ञाता (for कान्ता°) V1 परमास् (for अपरास्) — b) B1 परियुक्तान् (for ष्वक्तान्) D1 7-9 परस्पर (for ददर्श ह) — T1 om 13cd — c) T2 8 G तदा (for च तान्) D5 तत्र (for भूयो) — d) T2 G पुर (for पुनर्) B4 D5 6-8 पुन, D1-8 नृप, D5 तदा (for नृप)

14 a) D1-3 G2 स (for सु) D8 गीतध्वनीन्सु- मधुरान् — After 14a, D8 reads 2-3 — b) D5 च (for [त्]व) V1 B4 5 Dn [अ]ध्यापन (for [अ]ध्ययन) D10 तत्रैवाध्यापनध्वनिं — c) D1 8 G1 स (for सु) B1 हसाना मधुरा वाच, D1-2 5 °ना मधुर चापि, T1 °ना च ध्वनिं चापि — d) D1 6 9 तथा, D- तत (for तत्र) V1 D1 10 पार्थिव (for °व)

15 a) V1 B Dn2 D8 T2 8 G1 4 M8 तद्दृष्ट्वा, D1-3 दृष्ट्वा च (for तं दृष्ट्वा) Dn2 ह्यद्भुत, D5 चाद्भुत

2641 54 16 89 16 47 87

उत्तरान्वा कुरून्पुण्यानथ वाप्यमरावतीम् ॥ १६
किं त्विदं महदाश्चर्यं संपश्यामीत्यचिन्तयत् ।
एवं संचिन्तयन्नेव ददर्श मुनिपुंगवम् ॥ १७
तस्मिन्विमाने सौवर्णे मणिस्तम्भसमाकुले ।
महार्हे शयने दिव्ये शयानं भृगुनन्दनम् ॥ १८
तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया ।
अन्तर्हितस्ततो भूयश्च्यवनः शयनं च तत् ॥ १९
ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ।
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ २०
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥ २१
निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा ॥ २२
ततः स राजा कुशिकः सभार्यस्तेन कर्मणा ।
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् ॥ २३
ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः ।
पश्य भद्रे यथा भावाश्चित्रा दृष्टाः सुदुर्लभाः ॥ २४
प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ।
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ॥ २५
त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ।
तपसा हि सुतप्तेन क्रीडत्येष तपोधनः ॥ २६
अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः ।
इच्छन्नेष तपोवीर्यादन्याँल्लोकान्सृजेदपि ॥ २७

---

(for [अ]त्यद्भुत) —$^{b}$) B5 G2 चिंतयस् (for [अ]चिन्तयत्) — B1 om $15^{cd}$ —$^{c}$) D5 स्वप्नोयं किमु विस्तभ —$^{d}$) D1 8–9 च (for तु)

16 $^{a}$) D10 अह (for अहो) —$^{b}$) D8 [ऽ]ति (for ऽस्मि)

17 $^{a}$) V1 B Dn D4 T2 G2 च, T1 3 G1 M1–3 नु (for तु) D7 परम् (for महद्) —$^{b}$) T1 corrupt, T2 3 G M सत्य पश्यामि चिंतयन् — D5 om (hapl ?) $17^{c}$–$19^{d}$

18 D5 om 18 (cf v l 17) —$^{c}$) T G महार्हे (for °र्हे)

19 D5 om 19 (cf v l 17) —$^{a}$) B3 5 अभ्यगात् (for °यात्) D10 प्रकर्षेण (for प्रह°) —$^{d}$) S मुनिश्च (for च्यवन) D1–3 गत (for च तत्).

20 $^{a}$) G1 [ऽ]न्यच्च (for ऽन्यस्मिन्) —$^{b}$) D9 ह, M4 तस् (for तम्) —$^{c}$) V1 B1 3–5 Dn3 D2 वृष्यां, D5 (marg) 10 M1 वृश्या, D7 om, G2 3 मस्या (for बृस्या) —$^{d}$) V1 D5 तपमान (for जप°) —$^{f}$) M1–3 स नृप (for पार्थिवम्)

21 $^{a}$) D3 सर्वं (for चैव) —$^{b}$) D1–4 6 7 9 तथा (for ते च) —$^{c}$) D1 3 5 M पर्वताश् (for पादपाश्) —$^{d}$) G1 partly damaged D4 तत्रैव (for सर्वम्)

22 $^{b}$) D3 अनुत्तम (for पुनर्नृप) —$^{c}$) D1–3 कुशवल्कलभूयिष्ठो —$^{d}$) S (except M2) पुर

23 T1 om (hapl) 23 —$^{a}$) D1–3 सभार्यं (for स राजा) D6 तत स कुशिको राजा — D6 om $23^{b}$–$29^{c}$ —$^{b}$) D2 सगणस्, D3 तस्यर्षेस् (for सभार्यस्) —$^{d}$) T2 G2 स (for तद्) D2 परम् (for महद्)

24 D6 om 24 (cf v l 23) D4 om $24^{b}$–$29^{a}$ —$^{c}$) D7 8 महा (for यथा) —$^{d}$) D5 चित्रदृष्टा, D7 चित्रा दृष्टा, S दृष्टाश्चित्रा (by transp)

25 D6 om 25 (cf v l 23) D4 om 25 (cf. v l 24) —$^{a}$) T1 ऋषि (for भृगु) — B3 om (hapl ?) $25^{c}$–$26^{d}$ D7–9 om (hapl) $25^{c}$–$26^{b}$ —$^{c}$) D2 अवाप्यं (for °प्यं हि) — B2 om (hapl) $25^{d}$–$26^{a}$ —$^{d}$) Dn तु (for न)

26 D6 om 26 (cf v l 23) D4 om. 26 (cf. v l 24) B3 om 26, D7–9 om $26^{ab}$, B2 om $26^{a}$ (for all, cf v l 25) T1 om 26 —$^{d}$) D5 7–9 शक्यो द्रष्टु (for क्रीडत्येष) V1 B (B3 om) Dn1 n2 शक्यो मोक्षस्तपोबलात्

27 D6 om 27 (cf v l 23) D4 om 27 (cf v l 24) D3 om (hapl ?) $27^{ab}$ —$^{a}$) T1 महा (for अहो) D2 महर्षेश्, D7–9 हि महाश्, M1 विप्रर्षेश् (for ब्रह्म°) —$^{c}$) B° 4 D1–3 T G1 3 4 इच्छस्येव, Dn °येष, G2 °स्येव (for °न्नेष) —$^{d}$) D1–3 5 7–9 लोकानन्यान् (by transp)

ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणः ।
उत्सहेदिह कर्तुं हि कोऽन्यो वै च्यवनादृते ॥ २८
ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ।
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ॥ २९
इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै ।
संप्रेक्ष्योवाच स नृपं क्षिप्रमागम्यतामिति ॥ ३०
इत्युक्तः सहभार्यस्तमभ्यगच्छन्महामुनिम् ।
शिरसा वन्दनीयं तमवन्दत स पार्थिवः ॥ ३१
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभ ॥ ३२
ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ ३३
राजन्सम्यग्जितानीह पञ्च पञ्चसु यत्त्वया ।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ॥ ३४
सम्यगाराधितः पुत्र त्वयाहं वदतां वर ।
न हि ते वृजिनं किंचित्सुसूक्ष्ममपि विद्यते ॥ ३५
अनुजानीहि मा राजन्गमिष्यामि यथागतम् ।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ ३६

कुशिक उवाच ।

अग्निमध्यगतेनेदं भगवन्संनिधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ॥ ३७
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।

C. 13 2864
B. 13 54 38
K. 13 69 38
M. 13 47 110

---

28 D5 om 28 (cf v. l. 23). D8 om 28 (cf v. l. 24). T1 om 28-29. — b) V1 B (except B) Dn3 D3 कर्मिणः. T2 3 G कर्मणा (for °णः). D10 पुण्यात्मान्विद्धि कर्मणा. — c) V1 B D10 कृत्स्नेव, Dn1 n2 कृत्स्नैव, M3 कृत्स्नेद (for कर्तुं हि). D1-7 8-9 दस्मादेहकर्तुमेव हि, D6 दस्माह कर्तुमेव हि, T2 3 G दस्माहमिह कृत्स्नेद. — d) D10 [s]पि (for ऽन्यो). — After 28, B1 4 D7 8 10 T2 3 G M ins:

326* ब्राह्मण्यं दुर्लभं लोके तद्लब्ध्वा दुर्लभं तपः ।
सिद्धिस्तत्रापि दुष्प्राप्या सिद्धेरपि परा गतिः ।
[ B1 4 om (hapl) line 1 ]

29 D5 om 29ab? (cf v. l. 23). D8 om 29a (cf v. l. 24). T1 om 29 (cf v. l. 28). — b) D भवेत् (for नरैः). — c) D- स्व (for प्र). — d) D1 6-7 G2 युक्तांस्मि, D- युक्ता न (for युक्तौ स्व). D1-3 युक्ता स्यो धुर्यवद्रथे.

30 a) D1 6 7 6 T2 3 G M1 मन (for स). D5 इत्येवं चिंतमानस्य. — b) D2 T G च्यवनेन (for °नस्य). D1 6-8 च (for वै). — c) D5 corrupt, D10 त, T2 G2 4 M1-3 म (for स). V1 B Dn D1-10 T1 G2 नृपतिं, T2 वचन, T3 G1 3 4 च्यवन (T2 °न), M च नृपं (for स नृपं).

31 a) V1 B Dn D1 6-9 तु (for तम्). — b) V1 B Dn D1 2 8 10 सोऽभ्यगच्छन् (for अभ्य°). — G1 om 31c-33b. — c) D1-3 च (for तम्). — d) V1 B Dn D1 2 10 T1 च (for स). D1-9 वंदयामास पार्थिव.

32 G1 om 32 (cf v. l. 31). — a) D1 5 10 [आ]शिष. Dn1 D प्रयुजान, D1-3 सप्रयुज्याय (hypermetric) (for प्रयुज्याय). — b) Dn3 om स. D1 10 नराधिप. — d) Dn1 D. 2 3 T2 3 G2-4 पुरुषर्षभं (Dn1 D2 °भ), D1 2-3 T1 भरतर्षभ.

33 G1 om 33ab (cf. v. l. 31). — b) V1 B3 Dn3 G2 4 नृप (for नृपम्). B1 4 D6 भार्गवो नृपतिं पुन, D- D1-3 वो नृपतौ (B2 3 °तिं) नृप.

34 a) T- पूजितानि, T2 G1 2 4 निर्जितानि (for जितानीह). — b) V1 B (except B4) Dn D2 4 6 3 पच स्वय, D1- पचसु तव, D- 3 पंच च यत् (for पञ्चसु यत्).

35 a) D1-3 तव (for पुत्र). — b) V1 B- Dn प्र- (for [अह]). — d) D सुसूक्ष्मम् (for सुसूक्ष्मम्). D दृश्यते. T G दृश्यते (for विद्यते).

36 a) M मा (for मा). — D om. 36cd. — d) B3 G2 M1 2 4 वर (for वरम्).

37 C1 om. ... D- राजा (for कुशिक). T1 om 37a-38b (... ...). — a) D2 M1 मध्ये (for मध्य). V1 B- 4 3 Dn M-3 [इ]दं, B1 3 D1-3 M3 [इ]दे (for [इ]दं). — b) D तव (for मया). V1 D3 T2 3 G2 M-3 सान्निध्ये सन्निधौ मया. — c) T2 G2 4 V3 वर्तितं. D- भृगु (for भृगु-). — d) B1 D1 तद्वर. D1 ते वहु (for तद्बहु).

यत्प्रीतोऽसि समाचारात्कुलं पूतं ममानघ ॥ ३८
एष मेऽनुग्रहो विप्र जीविते च प्रयोजनम् ।
एतद्राज्यफलं चैव तपश्चैतत्परं मम ॥ ३९
यदि तु प्रीतिमान्विप्र मयि त्वं भृगुनन्दन ।
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ॥ ४०

इति श्रीमहाभारते अनुशासनपर्वणि चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## ५५

च्यवन उवाच ।
वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं च ब्रूहि नरश्रेष्ठ सर्वं संपादयामि ते ॥ १
कुशिक उवाच ।
यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव ।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ २
शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
अकिंचिदुक्त्वा गमनं बहिश्च मुनिपुंगव ॥ ३
अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ ४
तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ।
निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ॥ ५
धनानां च विसर्गस्य वनस्यापि च दर्शनम् ।

---

38 $T_1$ om $38^{ab}$ (of v l 37) — $^{b}$) $D_4$ 6–9 संप्राप्तो (for प्राप्तो मे) — $^{c}$) $V_1$ $B_1$ 2 4 5 Dn $D_{10}$ मया ब्रह्मन्, $D_5$ ममाचार्य, $T_1$ समाहारै, $T_2$ 3 $G_1$ 3 4 M °चारै (for °चारात्) $B_3$ प्रीतोसि यन्मया ब्रह्मन्, $G_2$ यत्प्रीतोथ समाचारै — $^{d}$) $V_1$ B Dn $D_4$ 6–9 कुल त्रा($D_4$ 6 8 9 पा)त च मेनघ, $D_{1-3}$ कुलं प्रीतोस्मि तेनघ

39 $^{a}$) $G_3$ एवं (for एष) — $^{b}$) T G $M_4$ [ऽ]पि (for च) — $^{c}$) $G_2$ राजफलं $D_5$ $M_4$ [ए]तत् (for [ए]व) — $^{d}$) $D_{10}$ [ए]त्र (for [ए]तत्) $V_1$ फल (for परं) $Dn_1$ $n_2$ तपसश्च फल मम, $D_5$ तपस्तत्तत्फलं मत

40 $^{a}$) $V_1$ B Dn $D_5$ 10 $T_2$ त्व (for तु) — $^{b}$) $V_1$ B Dn $D_{10}$ वै (for त्व) $D_4$ 6–9 -सत्तम (for नन्दन) — $^{c}$) $G_2$ अस्मिन् (for अस्ति) $D_2$ om मे

Colophon — *Parvan name* $B_1$ 2 4 $Dn_3$ $D_1$ शांति — *Sub parvan* $V_1$ B $Dn_1$ $n_2$ $D_1$ 2 7 10 दानधर्म — *Adhy name* $V_1$ $B_1$ 2 4 5 Dn $D_{2-4}$ 6–9 च्यवनकुशिकसंवाद $D_1$ च्यवनभृगुसंवाद, $D_5$ च्यावन, $T_2$ परशुरामचरित्रे कुशिकच्यवनसंवादे च्यवनदर्शनं — *Adhy no* (figures, words or both) $V_1$ 54 (as in text), $D_4$ 52, $D_{10}$ 58, $T_1$ M 83, $T_2$ 3 $G_3$ 4 90, $G_1$ 85, $G_2$ 84 — *Sloka no* $D_4$ 35

55

1 $B_3$ om 1 (retaining the ref.) — $^{b}$) $D_4$ यत्र (for यश्च) $T_2$ 3 $G_1$ 3 4 भो (for ते) — $^{c}$) $D_4$ 6–9 तच्, $M_4$ त्व (for तं) $Dn_1$ $n_2$ $T_1$ प्र, $D_{1-3}$ मे (for च) $D_{1-4}$ 6–9 नरव्याघ्र (for °श्रेष्ठ) — $^{d}$) $Dn_3$ $D_{10}$ [अ]ह (for ते)

2 $B_3$ om, $G_2$ राजा (for कुशिक) — $^{b}$) $G_4$ तथा (for ततो) — $^{d}$) $D_4$ 6 मद्गृह (for °हे)

3 $^{a}$) $D_{10}$ शयने (for °नं) $D_4$ वा (for च) $D_5$ [ए]व (for [ए]क) — $M_1$ om (hapl) $3^{c}$–$4^{b}$ — $^{c}$) $D_{10}$ (also as in text) S ($M_1$ om) न किंचिद् (for अकिं°) D (except Dn) च गृहाद्; $G_2$ शयनं (for गमनं) — $^{d}$) $B_3$ -सत्तम (for पुंगव)

4 $M_1$ om 4 (of v l 3) — $^{b}$) $D_3$ दर्शन पुनरेव च — $^{c}$) $D_{1-3}$ 10 शयित (for शयन) $B_3$ 4 पुनश्चा परपार्श्वेन

5 $^{a}$) $B_3$ तैलाभ्यगस्य गमन — $^{c}$) $D_{1-3}$ 5 यद्दग्धं, $D_4$ 6–9 तद्दग्ध (for विविध) — $^{d}$) $D_1$ 2 4–9 विधिवज्, $D_3$ विविध (for यद्दग्ध) $D_5$ वेन्गसि — $^{f}$) $V_1$ $B_5$ $Dn_3$ त्वया कृत (by transp)

6 $^{a}$) M हि (for च). $Dn_3$ $G_1$ 4 $M_4$ विसर्गं च,

प्रासादानां बहूनां च काञ्चनानां महामुने ॥ ६
मणिविद्रुमपादानां पर्यङ्कानां च दर्शनम् ।
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ॥ ७
अतीव ह्यत्र मुह्यामि चिन्तयानो दिवानिशम् ।
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ।
एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन ॥ ८

चयवन उवाच ।

शृणु सर्वमशेषेण यदिदं येन हेतुना ।
न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ॥ ९
पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु ॥ १०
ब्रह्मक्षत्रविरोधेन भविता कुलसंकरः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ ११
ततः स्वकुलरक्षार्थमहं त्वा समुपागमम् ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥ १२
ततोऽहमागम्य पुरा त्वामवोचं महीपते ।
नियमं कंचिदारप्स्ये शुश्रूषा क्रियतामिति ॥ १३
न च ते दुष्कृतं किंचिदहमासादयं गृहे ।
तेन जीवसि राजर्षे न भवेथास्ततोऽन्यथा ॥ १४
एतां बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोऽस्मि यदि मा कश्चिद्बोधयेदिति पार्थिव ॥ १५
यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव ते प्रीतो मनसा राजसत्तम ॥ १६
उत्थाय चास्मि निष्क्रान्तो यदि मा त्वं महीपते ।

C 13 2894
B. 13 55 18
K. 13 90 18
M 13 47 130

---

D2 °गेन्तु, D1-10 T3 G2 °गेश्च (for °गेस्य) —[b]) D1 2 10 घनन्य, D2 T1 G1 जनन्य, T2 3 G3 8 जलन्य (for वनस्य) G2 ज्वलनस्यापि दर्शन —[d]) D3 कान नाना (for काञ्च ) D1-2 महाद्युते (for °मुने)

7 [a]) Dn3 -वावाना, T1 सोपान (for -पादाना) —[b]) Some MSS पर्यंकाणा D5 मंचकाना महाद्युते —[c]) V1 चैव, D5 तत्र (for तस्य)

8 [b]) V1 B Dn D10 भृगूद्वह, S द्विजर्षभ (for दिवानिशम्) — T1 om. 8[cd] —[c]) D5-6 [अ]व- (for [अ]धि) —[d]) D1 [अ]पि, G2 [आ]शु (for [अ]स्य) D5 विनिश्चितं (for श्चयम्) —[e]) D5 एवम् (for एतद्) —[f]) D3-5 तवानघ (for तपोधन) D1 2 सर्वं श्रोतुं तवा(D1 °दा)नघ

9 G2 om the ref. —[a]) T1 अशेषं हि (for °षेण) —[b]) T1 च सदा, T2 तदिद (for य°) —[c]) D1 मयाख्यातुम्, D2 अनाज्ञा° (for अनाख्या°) D1-2 यदि शक्य समाख्यातुम् —[d]) D3 मया, D5 एतत् (for एव) D5-3 भारत (for पार्थिव)

10 [a]) D1 6 7 9 गदत (for व°) —[c]) D1 6 7 9 ते (for यद्)

11 [d]) V1 D1.2 4 7-9 बलान्वित, G2 M तपो° (for सम°)

12 [a]) D10 ते (for स्व) D8 नाशार्थम् (for रक्षा°) V1 B Dn ततस्ते कुलनाशार्थम् —[b]) D5 त्वामहं (for अहं त्वा) D1 8 T8 G1-3 समुपागत (for °गमम्) V1 B Dn D10 T2 G4 अहं त्वा समुपागत, D1 6-9 अहं त्वा समुपस्थित —[c]) D2 8 T1 चिकीर्षु (for °र्षन्) D1-8 कौशिकोच्छेद —[d]) T1 दिधक्षुश्च (for संदिधक्षु )

13 [a]) V1 B Dn पुरे, D10 पुर (for पुरा) —[c]) V1 D4 T2 3 G2 4 किंचिद् T2 3 G आरि(T2 G2 °र)-प्स्यु (for आरप्स्ये) D5 नियमे कंचिदारब्धे (sic) —[d]) G1 damaged, G4 इह (for इति)

14 [a]) V1 B1-3 Dn1 n3 दुष्कर, some MSS दुष्कृत —[c]) D1-10 राजेंद्र (for राजर्षे) —[d]) D1 6-9 असुमेधास् (for न भवेथास्) B1-3 Dn1 n2 n3 (marg) D10 त्वम्, D1-3 G2 त्वतो (for ततो) V1 B1 5 भवेथास्त्वमतोन्यथा

15 [a]) B5 Dn D2 M4 एव (for एता) —[c]) D1 2 4-7 T1 2 G3 M3 4 मा, G4 वा (for मा)

16 [a]) B5 यदि, T2 यथा (for यदा) —[b]) B2 सुसोह, D5 प्रसुतो (for स°) D3 वि (for प्र-) G2 सुसो न प्रतिबोधित —[c]) Dn3 सोह (for अहं), [illegible] प्रीतोस्मि (for ते प्रीतो)

17 [a]) T2 [अ]पि (for [अ]स्मि) Some MSS [illegible] क्रान्तो —[b]) D1 2 T1 मा (for मा) —[illegible] [illegible] भूया (for पृष्ठे) D1 2 3 G1 [illegible]

2884 55 18 90 18 47 130

पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ १७
अन्तर्हितश्चास्मि पुनः पुनरेव च ते गृहे ।
योगमास्थाय संविष्टो दिवसानेकविंशतिम् ॥ १८
क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप ।
एतां बुद्धिं समास्थाय कर्शितौ वां मया क्षुधा ॥ १९
न च तेऽभूत्सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् ॥ २०
भोजनं च समानाय्य यत्तदादीपितं मया ।
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च ते ॥ २१
ततोऽहं रथमारुह्य त्वामवोचं नराधिप ।
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ २२
अविशङ्को नरपते प्रीतोऽहं चापि तेन ते ।
धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयत् ॥ २३
ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव ।
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप ॥ २४
प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम् ।
यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं निदर्शनम् ॥ २५
स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम ॥ २६
निदर्शनार्थं तपसो धर्मस्य च नराधिप ।

---

18 $^a$) V1 B Dn पुनश्चास्मि (by transp), D10 पुनश्चापि. — $^c$) V1 B1-5 Dn D10 समुप्तो, B1 सद्दृष्टो (for संविष्टो)

19 $^a$) D1-8 मा ह्यसूयेथा; D4 5 T2 3 G M1-3 नाभ्यसू°, D8 T1 M4 माभ्यसू° (for मामसू°) Dn1 n2 क्षुधितौ मामसूयेथा, D6 7 9 क्षुभितो मा(D8 ना)भ्यसूयेथा — $^b$) B1 T2 3 G2-4 चापि, D10 चेति (for वेति) — After 19$^{ab}$, the sequence in T1 is 22$^c$–23$^b$, 21, 327*, 22$^{ab}$, 23$^{cd}$, 25$^{ab}$, and 24$^{ab}$ T1 om 19$^c$–20$^d$ — $^c$) V1 B3-5 Dn एव (for एतां) G4 अवस्थाय (for समा°) — $^d$) D5 क्षुधितौ, some MSS. कर्दितौ (for कर्शितौ) D2 4 5 10 T2 3 G वा (for वां) V1 B4 5 Dn D3 transp मया and क्षुधा

20 T1 om. 20 (cf v l 19) — $^a$) G4 om च T2 3 G न च ते वाक्सुसूक्ष्मापि

21 For the sequence in T1, cf v l 19 — $^a$) V1 D4 6-9 समासाद्य, D5 T1 2 °नीय (for °नाय्य) — $^b$) D4 6-9 चेदं (for तदा) — $^c$) D4 6-9 क्रुध्यते — $^d$) D5 G3 यदि (for इति) Dn D1 8 6 0 च मे; T2 3 G1-3 त्वया (for च ते) — After 21, D10 T G ins

327* रथेन वाहितश्चापि श्रमात्क्रोधोऽन्वयाय ते ।

[ T3 [अ]सि (for [अ]पि) T1 क्रमात् (for श्र°) ]

22 For the sequence in T1, cf. v l 19 — $^a$) D3 आस्थाय (for आरुह्य). — $^c$) D1 om सभार्यो B1 om, T3 G2, 3 M मा (for मां) T1 वहेत्युक्तस् (for वहस्वेति) — $^d$) M तत्र (for तच्च) T2 G2 तदा (for तथा). T1 तथैव कृतवानपि.

23 For the sequence in T1, cf v l 19. Dn1 om from 23 to the end of this adhy — $^a$) T2 3 G1 3 अथाविश, G4 अविशक (for °शङ्को) — $^b$) B2 त्वयि; D3 तेन (for चापि). V1 B° 5 Dn3 n3 D1, 2 M2 तेन ह, B1 3 D3-9 तेनच (for तेन ते) — $^c$) Dn3 G3 om च — $^d$) D4 6 7 9 प्रधर्षयेत्, T2 3 G1, 3 4 M1-3 [s]भ्यधर्षयत् (for प्रध ) D1-3 T1 M4 न त्वा क्रोधोभ्यय(D3 T1 °ध)र्षयत्

24 For the sequence in T1, cf v l 19 Dn1 om 24 (cf v l 23) — $^a$) T1 G3 M तत्र (for तत) D1 2 7 9 मे (for ते) D5 प्रीतेन येन ते राजन् — $^b$) D6 8 3 वपुर् (for पुनर्) D8 G3 एव, T G1 3 4 M एव (for एतत्) D4 3 मया; S तत (for तव) — T1 om 21$^{cd}$ — $^c$) T3 damaged D4 6-9 [ए]व ते; T2 G तदा, M तथा (for धन) D5 सभार्यधनभूयस्थ (sic) — $^d$) D2 उद्धृत,(for तद्विद्धि) D4 6-9 प्रसन्नेन जनाधिप.

25 For the sequence in T1, cf v. l 19 Dn1 om 25 (cf v l 23) — $^a$) D4 6-9 transp तव and च. —T1 om 25$^{cd}$. D6 om 25$^d$ — $^d$) B1 3 D5 दिव्य; T3 एव (for दिव्य) G3 सुदर्शन (for निद°). T2 G2 दृष्टं जीवत्यदर्शनं, G4 दृष्टं दिव्यप्रदर्शनं

26 Dn1 om 26 (cf v l 23) — $^a$) D5 स्वर्गो दृष्टस् (for स्वर्गोद्देशस्) T2 M तदा (for त्वया) —D4 6 om (hapl) 26$^b$–27$^c$ — $^b$) D7-9 M स्व (for स) D1-8 सर्वत (for पार्थिव) — $^c$) V1 अपि (for अनु) S [s]य (T1 य) (for ऽसौ) — $^d$) G4 नृपात्मज (for नृपोत्तम)

27 Dn1 om 27 (cf v l 23). D4 6 om. 27$^{abc}$

तत्र यामीत्स्पृहा राजंस्तच्चापि विदितं मम ॥ २७
ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते ।
अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव ॥ २८
एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात दुर्लभम् ।
ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता ॥ २९
भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः ।
तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ॥ ३०
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ।
पौत्रस्ते भविता विप्र तपस्वी पावकद्युतिः ॥ ३१
यः स देवमनुष्याणां भयमुत्पादयिष्यति ।
त्रयाणां चैव लोकानां सत्यमेतद्ब्रवीमि ते ॥ ३२
वरं गृहाण राजर्षे यस्ते मनसि वर्तते ।
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ॥ ३३

कुशिक उवाच ।

एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने ।
भवत्वेतद्यथात्थ त्वं तपः पौत्रे ममानघ ।
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ॥ ३४
पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै ।
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ।
कश्चास्मै भविता बन्धुर्मम कश्चापि संमतः ॥ ३५

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

C. 13 2903
B 13 55 37
K 13 90 38
M 13 47 151

(cf v 1 26) D om (hapl) 27 —$^b$) B1 om च M1-3 चर्षित्व (for °न्य च) T G परतप (for नराधिप) —$^c$) T1 G न (for या) D1 2 नयामीत्युद्दे राजन् —$^d$) B1 2 4 तत्र M1-2 मा च (for तच्च) M निन्दित V1 B3 Dn2 n3 D5 मया, D6-9 तत्र (for मम)

28 Dn1 om 28 (cf v 1 23) D1 om 28 —$^a$) D. यत् (for हि) —After 28$^a$, T1 reads 30$^d$–31$^a$ for the first time, repeating 30$^d$ in its proper place —$^c$) T2 3 G1-3 M1-3 अवमत्य (for °मन्य) —$^d$) D1 देवेंद्रत्वं गमिष्यसि, T2 3 G देवत्व चापि पार्थिव

29 Dn1 om 29 (cf v 1 23) D1 om 29–30 —$^a$) V1 D2 एव (for एतद्) S यथावत्त (for त्थ त्व) —$^b$) M तत (for तात) —$^c$) Some MSS ब्राह्मणे

30 Dn1 om 30 (cf v 1 23) D1 om 30 (cf v 1 29) —$^a$) D5 S (except T1 M1) [ए]ष (for [ए]ष) —$^c$) D1 8 तृतीये, D द्वितीये (for तृतीय) V1 B2 (marg) 3–5 Dn2 n3 D1 2 6 तुर्यं (for प्राप्य) D3 तृतीयपुरुषे तुर्यं —T1 reads 30$^d$ for the first time after 28$^a$ —$^d$) D 10 T1 (both times) G गमिष्यसि, D2 6 भविष्यति (for गमि°)

31 Dn1 om 31 (cf v 1 23) D1 6 om (hapl) 31$^a$–32$^b$ T1 reads 31$^a$ after the first occurrence of of 30$^d$ —$^a$) T1 यदास्ते ब्राह्मणश्रेष्ठ —T1 om 31$^b$ —$^c$) D. नप्ता (for पौत्रस्) V1 B1 3 D. T1 2 G1 2 4 M1 4 विप्रस्, D1-9 पुत्र (for विप्र) —$^d$) B3 परम (for पावक)

32 Dn1 om 32 (cf v 1 23) D1 6 om 32$^{ab}$ (cf v 1 31) —$^a$) D. यस्मादेव, G1 य सदैव (for य स देव) —After 32$^{ab}$, D10 S (except T1) ins

328* जमदग्नौ महाभाग तपसा भावितात्मनि।
स चापि भृगुशार्दूलस्त्व वेद धारयिष्यति।
[(L 1) T2 जामदग्ने (for जमदग्नौ)]

—$^c$) V1 B Dn2 n3 D8 10 एव, G3 अपि (for चैव) —$^d$) S भविष्यति (for ब्रवीमि ते)

33 Dn1 om 33 (cf v 1 23) —$^b$) B5 Dn2 D3-10 T1 G1 यत् (for यस्) —B3 D1-2 om (hapl) 33$^{cd}$ —$^c$) B1 करिष्यामि (for गमि) —$^d$) D5 पुण्य (for पुरा) Dn2 [ऽ]भि (for ऽति)

34 Dn1 om 34 (cf v 1 23) D. om the ref —$^a$) T2 3 G1 3 4 [ऽ]त्र (for ऽद्य) —$^b$) V1 B Dn2 n3 D1 10 यस् (for यत्) T1 यस्त्व प्रीतो महाद्युते —$^c$) T1 एवमस्तु (for भवत्वेतद्) —$^d$) V1 B Dn2 n3 D10 भवेत्पौत्रो, D1-3 तस्मिन्पौत्रे, S तथा पौत्रो (for तप पौत्रे) —$^e$) V1 Dn3 मत्कुलस्य, D10 कुलमेव (for मे कुलस्य)

35 Dn1 om 35 (cf v 1 23) —$^a$) D5 अतश्च (for पुनश्च) D1 6-9 अतश्च श्रोतुमिच्छामि —$^b$) V1

# ५६

च्यवन उवाच।

अवश्यं कथनीयं मे तवैतन्नरपुंगव।
यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप ॥ १
भृगूणां क्षत्रिया याज्या नित्यमेव जनाधिप।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ २
क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप।
आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥ ३
तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः।
और्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥ ४
स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति।
महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ ५
कंचित्कालं तु तं वह्निं स एव शमयिष्यति।
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः ॥ ६
पुत्रं तस्य महाभागमृचीकं भृगुनन्दनम्।
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ ७
क्षत्रियाणामभावाय दैवयुक्तेन हेतुना।
स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति ॥ ८
जमदग्नौ महाभागे तपसा भावितात्मनि।
स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ ९
कुलात्तु तव धर्मात्मन्कन्यां सोऽधिगमिष्यति।

---

B5 Dn2 T1 मे (for चे) —ᵈ) D1 5 कुले D7 च (for मे) —ᵉ) D5 [अ]य, S (except T1 G3 M1) [अ]स्य (for [अ]सौ) —ᶠ) D1 2 6 मामकश (for मम कश्) V1 [अ]पि सुव्रत, D1-3 6-10 [अ]पि नामत, D5 [अ]पि वा मत, T1 M1-3 पिता मम; T2 G M4 पितामह (sic) (for [अ]पि समत) T3 मम कस्य पिता वर

Colophon om in Dn1 — *Parvan name* B1-4 Dn2 D1-3 शांति — *Sub parvan* B1 2 4 5 Dn2 n3 D1 2 10 दानधर्म — *Adhy name* V1 B1 2 4 5 Dn2 n3 D1-4 6-10 च्यवनकुशिकसंवाद, D5 च्यावन, T2 परशुरामचरित्रे कुशिकच्यवनसंवादे कुशिकस्य ब्राह्मणत्वप्रवर प्राप्ति — *Adhy no* (figures, words or both) V1 55 (as in text); D6 53, D10 59, T1 M 84, T2 3 G2 4 91, G1 86, G3 65 — *Śloka no* D1 33

## 56

1 ᵃ) B3 5 D1 2 6 7 अवश्य (for °श्य) D1-4 6-9 वै (for मे) —ᵇ) B1 युक्त ते, D1 2 10 तथैतन्, D3 om (for तवैतन्) —ᶜ) D6 यदर्थं त्वा ह सजेतु

2 D1 om. (hapl) 2ᵃ-3ᵇ D4 6 om (hapl) 2ᵃᵇ —ᵃ) D8 10 T3 G भृगूणां क्षत्रियाणां च —ᵇ) Dn1 n2 D.8 एतज् (for एव) B2-4 D7 9 नराधिप (for जना°). D5 जनिता यो भवेत्सुत —ᶜ) G2 तेजोभेद (for ते च भेदं) S यास्यंति (for गमि°) —ᵈ) D4 5 G1 2 4 देव (for दैव)

3 D3 om 3ᵃᵇ (cf v 1 2) —ᵇ) Dn3 D7 जनाधिप (for नरा°) —ᵈ) Some MSS देव (for दैव) D7 निपातिता (for निपीडिता)

4 ᵇ) D2 4 10 T G1 2 4 कुल; M गृह (for कुले) —ᶜ) V1 B Dn D2 4 6-10 ऊर्वो (for और्वो) —ᵈ) S (except T1) ज्वलिताग्नि (for ज्वलनार्क)

5 ᵃ) B2 damaged, B4 त्रैलोक्यस्य (for स त्रैलोक्य) —D2 om 5ᶜ-6ᶜ

6 D4 om 6ᵃᵇᶜ (cf v 1 5) —ᵃ) D. G1 2 4 किंचित् (for कं°) Dn1 n2 वह्नि च (for स वह्नि) —ᵈ) D4 6 7 प्रक्षिप्त (for °प्य) D10 पुंगव (for सत्तम)

7 B3 om 7-8 —ᵃ) D1-4 6-8 तस्य (for तस्य) Dn1 n2 महाराज (for °भागम्) —ᶜ) T1 कृतो; T2 3 G स्नेहाद् (for कृत्स्नो) —ᵈ) B4 D1 2 M1 4 °स्याप्यते (for °स्थास्यते)

8 B3 om 8 (cf v 1 7). —ᵇ) D5 कर्मणा (for हेतुना) —ᵈ) Dn1 D5 पुत्रे D1 2 5 समामयिष्यति, D3 T G2 3 संक्रम°

9 ᵃ) D6 M1-3 महाभाग

10 D9 om (hapl) 10-11 —ᵃ) D1 7 8 च (for

उद्भावनार्थं भवतो वंशस्य नृपसत्तम ॥ १०
गाधेर्दुहितरं प्राप्य पौत्री तव महातपाः ।
ब्राह्मणं क्षत्रधर्माणं राममुत्पादयिष्यति ॥ ११
क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम् ।
तपसा महता युक्तं प्रदास्यति महाद्युते ॥ १२
स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः ।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ १३
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति ।
भविता त्वं च संबन्धी भृगूणा भावितात्मनाम् ॥ १४

भीष्म उवाच ।
कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः ।
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह ।
एवमस्त्विति धर्मात्मा तदा भरतसत्तम ॥ १५
च्यवनस्तु महातेजाः पुनरेव नराधिपम् ।
वरार्थं चोदयामास तमुवाच स पार्थिवः ॥ १६
बाढमेवं ग्रहीष्यामि कामं त्वत्तो महामुने ।
ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् ॥ १७
एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः ।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा ॥ १८

C. 13 2923
B. 13. 56 19
K. 13 91 19
M. 13 47 171

---

10) Dn2 धर्मज्ञ (for धर्मात्मन्) — After $10^{ab}$, S ins

329* क्षत्रहन्ता भवेद्धिंस्त्रमिति देव सनातनम् ।
नारायणमुपान्यास्य वरात्तं पुत्रमिच्छति ।

[ T1 om line 1 — (L 1) T3 -हता (for -हन्ता) T3 हिंस्याद् (for हिंस्त्रम्) G1 3 4 -त्रैव (for देव) — (L 2) T1 उप-याय (for उपास्यास्य) T1 वरात्त, T2 वरार्थं, T3 M वरार्थं (for वरात्त) Madras ed इच्छति (for इ) ]

— D3 om (hapl) $10^{c}$–$11^{d}$ — c) V1 om from उद्भावनार्थं up to दुहितर (in $11^{a}$) B5 उद्भावनार्थो गुणवो, D1 6 8 उद्भवेनाथ भवतो, T1 3 G उत्पा(G1 3 °त्ता)पनार्थं म° — d) B Dn D2 10 M2 वंशस्य भरतर्षभ

11 V1 om up to दुहितर (in $11^{a}$), D3 5 om 11 (for all, cf v l. 10) — b) D1 7 1-3 तव पौत्री (by transp), G2 4 पौत्रं तव — c) B1 2 Dn2 D10 -कर्माण (for -ध°) — d) V1 B Dn D4 10 T2 3 G पुत्रम् (for रामम्)

12 a) D3 T G -धर्माणं (for क°) — b) D1 6-9 M बृहस्पतिसमौजसम — d) T2 गाधि (for गाधे) D1-3 तु, M3 स (for सु) — f) D1-4 6-9 पितामह (D1 °हे), D10 महाद्युतिं, S तपा (for °द्युते) D5 प्रसादयति पितामह

13 a) D1-3 6-9 स्त्रियस् (for स्त्रियौ) D5 शृणु यत्कारण त्वं हि — b) T2 3 G1 2 4 M परिवृत्तौ (for °वर्ते) D -9 भविष्य(D1-3 5 °ष्य)ति नरा(D2 5 जना)धिप, G2 परिवृत्तौ भविष्यति — d) D1 न वृथा, D- अन्यथा (for ना°) D10 [ए]व (for [ए]तद्)

14 D1 6 om. (hapl) $14^{ab}$ T1 om $14^{a}$–$15^{b}$ — b) D3 भविष्यति, D7-10 S (T1 om.) उपे (for उपै) — c) D- सर्वार्थी (for संबन्धी)

15 T1 om $15^{ab}$ (cf v l. 14) — a) D5 तदा (for मुनेर्) — c) B1 राजन (for राजा) — d) G1 M1 [ए]तद् (for [इ]दम्) — f) G2 तथा, M1 सदा (for तदा)

16 b) D1 6 7 8 जनाधिप (D4 °प), D8 युधिष्ठिर, G4 नराधिप (for °पम्) — c) D9 om from चोदयामास up to मुनि (in $18^{b}$) D1 6 नोदयामास (for चोद°) D5 वरार्थं प्रेरयामास — d) D5 नराधिपं, T1 M [अ]थ पार्थिव (for स पा)

17 D2 om 17 (cf v l. 16) — a) D- वरम् (for बाढम्) D5 S (except T1) एव (for एवं) V1 B Dn D10 करिष्यामि (for ग्रही°) — b) B5 कामं त्वत्तो, T G1 3 4 कामास्त्वत्तो, G2 त्वत्त कामान् (for कामं त्वत्तो) D3 कर्म त्वत्तो महामते — D1 om $17^{c}$–$18^{b}$ — c) D1 2 6-8 G2 ब्रह्मभूय, T G1 3 4 M °भूय (for °भूत) — d) D7 दधे (for भवेत्)

18 D9 om $18^{ab}$ (cf. v l. 16) D4 om $18^{ab}$ (cf. v l 17) — a) D5-8 इत्यम् (for एवम्) D1-8 [इ]त्येव (for थ) S तथेत्युक्तस्तथेत्येव — c) V1 D1-8 अभ्यनुज्ञाप्य (for °ज्ञाय) — d) B1 T2 तथा (for तदा)

19 a) D1-4 6-9 तात (for नर्षभ) — G1 damaged for $19^{b-d}$ — b) D1-9 G2 विशेषेण (for क्र°)

13 20 एतत्ते कथितं सर्वमशेषेण मया नृप ।
20 172 भृगूणां कुशिकाना च प्रति संबन्धकारणम् ॥ १९

यथोक्तं मुनिना चापि तथा तद्भवन्नृप ।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव ह ॥ २०

इति श्रीमहाभारते अनुशासनपर्वणि षट्पञ्चाशत्तमोऽध्याय ॥ ५६ ॥

# ५७

युधिष्ठिर उवाच ।
मुह्यामीव निशम्याद्य चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसंघातैः श्रीमद्भिः पृथिवीमिमाम् ॥ १
प्राप्य राज्यानि शतशो महीं जित्वापि भारत ।
कोटिशः पुरुषान्हत्वा परितप्ये पितामह ॥ २

का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति ।
या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ॥ ३
वयं हि तान्गुरून्हत्वा ज्ञातींश्च सुहृदोऽपि च ।
अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥ ४
शरीरं योक्तुमिच्छामि तपसोग्रेण भारत ।

---

D8 तव (for नृप) — D1 om (hapl) 19c–20b — d) V1 B Dn अभि, D10 S (G1 damaged) प्रीति (for प्रति) D8 सधान, D5 वधस्य, D3 सवधि (for सवन्ध)

20 D4 om 20ab (cf. v l 19) — a) V1 B Dn D10 ऋषिणा (for मुनिना) — b) B1-3 Dn D1-8 9 10 T1 G1 4 तदा (for तथा) D5 कथित नृपसत्तम, G2 अशेषेणाभवन्नृप — c) D7 तया (for मुनेर्) — d) V1 B Dn D6 8 10 T G2 4 हि (for ह)

Colophon — *Parvan name* B1 ° 4 D1 ज्ञाति — *Sub parvan* V1 B1-4 Dn D1 2 7 9 दानधर्म — *Adhy name* N च्यवनकुशिकसंवाद, T2 विश्वामित्रपरशुरामोत्पत्तिचरित्रे कुशिकच्यवनसवादे परशुरामविश्वामित्रवरोत्पत्तिवरप्राप्तिः च्यवनतीर्थयात्राप्रमारण, M ब्रह्मक्षत्रकथन — *Adhy no* (figures, words or both) V1 56 (as in text), D6 53, D10 60, T1 M 85, T2 3 G2 4 92, G1 87, G3 86 — *Śloka no* D4 18

## 57

1 =(var) 12 33 5 D10 G3 om the ref — a) B1-3 T1 [इ]ह, T2 3 G [इ]ति (for [इ]व) D1 8 9 T2 M4 निशाम्य B2 D3 [अ]य (for [अ]द्य) D6 इदानीं तु विशेषेण — b) D5 चिंतयामि (for °यान) — c) T G सिंहैस्तै (T1 °स्तु; T2 °श्च), M -संघांवै (for सघातै)

2 =(var) 12 33 6 — a) D5 राज्य च (for राज्यानि) — b) Dn1 n2 D1 2 T1 [अ]थ, D2 4 6-9 च (for [अ]पि) B. D1 6-9 पार्थिव (for भारत) D5 महीं हित्वा च पार्थिव — c) S तु नरान् (for पुरुषान्) D5 जित्वा (for हत्वा) — M1-3 om (hapl) 2d–4a — d) D1 स नितप्ये (for परि°) D3 पुन पुन (for पितामह)

3 =(var) 12 33 7 M1-3 om 3 (cf. v l 2) — a) D5 कावस्था (for तु तासा). — b) V1 B3-5 Dn D10 ममवस्था (for अवस्थाद्य) D2 गमिष्यति (for भवि°) D5 भविष्यति पितामह — c) D8 या हीनै, G2 याभिस्ता (for या हीना) D1 पतितै (for °भि) — d) T2 3 G वधुभिस् (for भ्रातृ°)

4 =(var) 12 33 11 M1-3 om 4a (cf v l 2) — a) D5 स्वय (for वय) D10 च (for हि) B5 Dn D1-7 9 10 T2 3 G3 4 कुरून् (for गु°) B3 ते वयं सहितान्हत्वा, M4 वयस्यांश्च गुरून्हत्वा — b) Dn1 n2 [s]पि वा, D4-9 नृप (for ऽपि च) — c) D6-9 अर्वाक् (for अवाक्) — d) D1-9 नरकं (for °के) — After 4, D5 reads 8cd for the first time, repeating it in its proper place

5 =(var) 12 33 12 D. om. 5–6 — b) D6 7 पार्थिव (for भारत) — T1 om 5cd — c) D6 7 9 उपदिष्टान् (for °ष्टम्) — d) D1 6-8 भवतोर्हं, D10 स्वत्तोह च (for तत्त्वतोऽहं)

6 =(var) 12 34 1 D5 om 6 (cf v l 5).

उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशां पते ॥ ५

वैशंपायन उवाच ।

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः ।
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ ६
रहस्यमद्भुतं चैव शृणु वक्ष्यामि यत्त्वयि ।
या गतिः प्राप्यते येन प्रेत्यभावेषु भारत ॥ ७
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ ८
ज्ञानं विज्ञानमारोग्यं रूपं संपत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥ ९
धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ १०
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशिना राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ ११
पयोभक्षो दिवं याति स्नानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन संततिः ॥ १२
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात् ।
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् ॥ १३
नित्यस्नायी भवेद्दक्षः संध्ये तु द्वे जपन्द्विजः ।
मरुं साधयतो राज्यं नाकपृष्ठमनाशके ॥ १४

C. 13 2939
B 13 57 14
K 13 92. 14
M 13 43 14

---

— [b]) D1 2 महातपा, T2 3 G महीपते, M महामति (for °मना) — [d]) D1 युधिष्ठिर महामते

7 Before 7, B1. 4 D1–10 T3 M1 2 ins. भीष्म उवाच — [a]) D. [पु]तच्च (for [च]ैव) — [b]) D5 T3 पार्थिव, D8 हि त्वयि, T1 यद्वच, T2 G1 2 4 M भारत (for यत्त्वयि) — Before 7[cd], T2 ins. श्री भीष्म — [d]) D1–2 -भावेषि, G2 om. (for भावेषु) M पार्थिव (for भारत) V1 B Dn D1–10 प्रेत्यभावे विशां पते

8 [a]) D10 T2 स्वर्ग (for स्वर्गम्) — D5 reads 8[cd] for the first time after 4 — [c]) D. (both times) -कामार्थ, T1 -प्रकर्ष, T3 कळत्र (for प्रकर्षो) D. 5 (first time) 7 8 भोगाश्च, T2 भोगश्च (for भोगाश्च) — [d]) B2 D. . (second time) प्राप्यते, S लभ्यते (for लभ्यन्ते)

9 [a]) V1 B (except B1) Dn1 n2 D10 ज्ञान (for ज्ञानं) D1 5 ज्ञानमारोग्यरूपं च — [b]) V1 B. Dn2 D3 6 9 T M2–4 रूप (for रूपं) D5 om. संप D5 संपत्तिश्च तथैव च

10 [a]) D6 धर्म (for धनं) — [b]) V1 B -3 Dn D1–9 मौनेनाज्ञा, B1 मौने ज्ञान, D1–2 मौने (D1 न, D8 °नी) यज्ञ (for मौनं ज्ञानं) — [c]) V1 B5 -भोगस्तु, B1 D10 -भोगाश्च, B2 4 D3 8 T2 भोगान्तु, D. -भोगाश्च (for भोगांस्तु) — [d]) B3 याचित, M1 दीपित (for जीवितम्)

11 [a]) D1. 2 बल, M1 पर (for फलं) D7 10 अहिंसया बल रूप — [b]) D1–7 10 G1 दीक्षया, G3 M1–3 दीक्षाया (for °या) D2 श्रीकुले, D10 सत्कुले (for वै कुले) — [c]) D10 S मूलाशनात् (for °शिना) T3 राजन् (for राज्यं) D2 फलमूलाशनाद्राज्य — [d]) B1 T3 M1–3 स्वर्ग D2 पर्णादिनो, S अनात् (for शिना) D. स्वर्गापवर्गिना भवेत

12 [a]) D2 पयोभक्ष्य, D4 भक्ष्यो, D. पक्षभक्षी, M1 पयोभक्षो (for भक्षो) M1–3 पयोभक्षा दि( M2 °क्षादि )व यान्ति — [b]) V1 B Dn D 10 T G स्नानेन (for स्ना ) D7 M1–3 द्रविणाधिका — [c]) B2–4 D1 6 7 9 10 T1 विद्या (for विद्या) — [d]) D1 M1–3 नित्य (for नित्य ) G4 श्राद्धे च (for श्राद्धेन) B2. 4 D7 10 T1 सतति (for °ति ) D2 नित्यं शुद्धेन संतति

13 [a]) D. यवाढ्य, T1 गवाढ्य (for °ढ्य ) T2 योग (for शाक-) — [b]) V1 B Dn D10 तृणाशिना, D1 2 स्वर्गशनात् (for तृणा°) D1 6 7 8 स्वर्गमाहुः फला शनात् — [c]) G2 स्त्रियस्तु (for स्त्रियस्) D10 त्रिषवणे V1 B Dn D. 8 स्त्रियस्त्रिषवणे (Dn2 D7 8 °णं) स्नात्वा — [d]) M2 om वायु B2 (marg) Dn2 कुलं (for क्रतुं) Dn2 भवेद् (for लभेत्)

14 T1 om 14 — [a]) M नित्योपायी (for नित्यस्नायी) T2 2 G तीर्थसेवी (for भवेद्दक्ष) — [b]) V1 तु द्विज, D2 4 6–3 द्वे तु (by transp) S (T1 om ) नृप (for द्विजः ) D. सन्ध्यादृयजपाद्विज, D 6 द्वे सन्ध्ये तु द्विजोत्तम — [c]) D1–3 मेरु, D1 6 मरु, D–3 मन्त्र, D10 T2 3 G1 2 4 मंत्र (for मरुं ) Dn1 n2 D2 राजन् (for राज्यं ) — [d]) D1 M1 जनार्दने, D. °शके (for °शके)

15 [a]) Dn2 D1. 2 S (except M1) स्थण्डिलेषु (Dn2 D1 2 °ले तु )-शयानानां; D. °स्थण्डिलशायी च — [b])

स्थण्डिले शयमानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥ १५
शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते ॥ १६
रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात्प्रजास्यायुष्मती भवेत् ॥ १७
उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥ १८
कीर्तिर्भवति दानेन तथारोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं वापि पुष्कलम् ॥ १९
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती ।
अन्नपानप्रदानेन तृप्यते कामभोगतः ॥ २०
सान्त्वदः सर्वभूतानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति ॥ २१
दीपालोकप्रदानेन चक्षुष्मान्भवते नरः ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥ २२
गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला ।
केशश्मश्रून्धारयतामग्र्या भवति संततिः ॥ २३
उपवासं च दीक्षां च अभिषेकं च पार्थिव ।
कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥ २४
दासीदासमलंकारान्क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥ २५

---

D6 गृहे शयनासनानि च — c) D5 वासी च (for -वासोभिर्)

16 T1 om 16ab — a) B1 D4 M4 दानानि, M2 3 दानेन (for यानानि) M1 शय्यासनादिदानेन — b) D1-9 योगात्मनि, M भो(M2 यो)गयुक्तस् (for योगयुक्ते) — d) D5 G2 ब्रह्मलोक, D6-9 °लोके (for °लोको) V1 B Dn D10 ब्रह्मलोके महीयते

17 a) D5-9 संहारे, T2 3 G1 3 4 समाहात् (for -संहारात्) — M1 3 om (hapl) 17bc. — b) D1-9 अपि (for इह) — c) D1-7 9 -संहारे (for °रात्) — d) B1 Dn1 n2 D10 G3 हि, D. च (for [अ]स्य)

18 a) D2 तदुवास, T1 उप° (for उद°) V1 G2 भवेद् (for वसेद्) D4 6 7 9 उद्वाम वासयेद्यस्तु, D8 उदवासाच्च यस्तु, T3 °वासी भवेद्यस्तु — c) Dn2 D1 3 4 6-9 नरश्रेष्ठो (for °श्रेष्ठ). D5 सत्यवाक्ये नरश्रेष्ठो

19 a) B6 कांतिर् (for कीर्तिर्) — D1 om (hapl) 19b-20c T1 om 19cd — d) V1 B Dn1, n2 D6 7-10 G1 2 चापि, T3 वापि (for वापि)

20 D1 om 20abc (of v l 19) D2 om (hapl) 20ab — b) D1 3 5 6 8-10 तृप्तिर् (for कीर्तिर्) — c) Dn1 n2 अन्नस्य तु; T2 अन्नाना च (for अन्नपान). B6 अन्नप्रदानदानेन, D10 °पानेन दानेन — d) V1 B Dn तृप्यते, some unused MSS दृश्यते (for तृप्यते) Some unused MSS दिव्य रूप प्रयच्छति

21 a) B3 4 शांतिद, T1 सान्त्वेन, T2 3 G M1-3 सांत्वन (for °द) D5 शांतिद, सर्वलोकाना — b) D6 -पापै (for -शोकैर्) D1-10 T1 प्र (for वि) G3 सर्वलोकेषु मुच्यते — c) D1-9 राजन् (for राज्यं) — d) Dn3 द्विव्य (for दिव्य) D. हि गच्छति, D6-9 T1 3 G1 M4 निय° (for निय°) D1 G2-4 दिव्यरू (G2 दीप्य रू)प नियच्छति, M1-3 द्विजत्वं वापि पुष्कलं (= 19d)

22 a) B4 दीपमाला; D2 8 10 लोके दीप (for दीपालोक) — b) D1 6-9 जायते (for भवते) D5 चक्षुष्माञ्जायते नृप; T2 3 G M °न्बुद्धिमान्भवेत् — d) D5 च गच्छति; D10 प्रयच्छति (for च विन्दति)

23 D1 om 23. — a) Dn1 n2 D10 T G -प्रदानेन, D1-3 5 निवृत्त्या च (for °त्त्या तु) Dn3 गंधमाल्यानि दत्त्वा च, D5-9 °माल्यानुनिवृत्त्या — c) B1 2-5 Dn2 D3 10 T2 G1 2 4 श्मश्रु, B2 Dn1 D1 2 श्मश्रु, D5 G2 श्मश्रू (for श्मश्रून्)

24 a) D1-7 9 भिक्षा (for दीक्षां) D1 10 वा (for the second च) — b) B3 D1-6 10 T2 3 G1 3 4 M [अ]प्यभिषेकं (for अभि°) D2 भारत (for पार्थिव) — d) D1-7 9 -यानाद् (for स्थानाद्)

25 a) D4 7 -यानम् (for दासम्) D1-7 9 G2 अलंकार (for °कारान्) D8 दासीयानमलंकार — b) D1 8-9 T2 विविधानि, T3 G च धनानि (for च गृहाणि) — c) M1 3 देयान्सुतान् (for देया सुता) — d) D2, 5 T1 प्राप्नोति भरतर्षभ, D8 °ति मनुजाधिप, D1 6-9 °ति परमां गतिं

26 T1 om 26ab — b) D2 त्रिदिवे — c) V1

ऋतुभिश्चोपवासैश्च त्रिदिवं याति भारत ।
लभते च चिरं स्थानं बलिपुष्पप्रदो नरः ॥ २६
सुवर्णशृङ्गैस्तु विभूषितानां
गवां सहस्रस्य नरः प्रदाता ।
प्राप्नोति पुण्यं दिवि देवलोक-
मित्येवमाहुर्मुनिदेवसंघाः ॥ २७
प्रयच्छते यः कपिलां सचैलां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघास्य भूत्वा
नरं प्रदातारमुपैति सा गौः ॥ २८
यावन्ति लोमानि भवन्ति धेन्वा-
स्तावत्फलं प्राप्नुते गोप्रदाता ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥ २९
सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ ३०
स्वकर्मभिर्मानव संनिबद्धं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुयुक्ता
दानं गवां तारयते परत्र ॥ ३१
यो ब्रह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति चान्नं विधिवच्च यश्च
स लोकमाप्नोति पुरंदरस्य ॥ ३२
नैवेशिकं सर्वगुणोपपन्नं
ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्रगुणान्विताय
तस्यापि लोकाः कुरुषूत्तरेषु ॥ ३३

C. 13. 2978
B. 13 57 33
K. 13 52. 33
M. 13 43 33

---

B Dn D10 च शिव, D1-3 रुचिर, D4 च स्थिर, D5 8 च चिर, S तु (T2 च) पर, T3 (before corr) चापर (for च चिरं) — [d]) V1 B Dn फल, D3 बलि (for बलि-) D4 प्रदानत (for -प्रदो नर)

27 [a]) Dn3 सु-, D1 6-9 च (for तु) D8 om वि V1 B Dn D1-4 10 विराजिताना (for विभूषि°) D5 सुवर्णशृङ्गेण विराजमाना — [b]) V1 B Dn D10 T2 3 G1. 3 4 प्रदानात् (for °ता) — [d]) V1 B Dn D4-9 T1 त्रिदि (for मुनि) B1 लोका (for संघा)

28 [a]) V1 सरूपा, B Dn D10 सवत्सा, S सचेला (for सचैला) — [b]) D10 G2 कनकाग्र (for °ग्र) — [c]) G1 partly damaged V1 B1 3 Dn कामदुहा, D6-9 °दुघाश् (for °दुघा) D1-8 [स्त]य, D-9 च, S तु (for [स्त]स्य)

29 [a]) G1 damaged Some MSS रोमाणि — [b]) G1 partly damaged Dn3 तावत्काले (for °त्फल) V1 B1 3 5 Dn1. n3 D5 प्राप्य स, T1 प्राप्स्यति, T2 प्राप्स्यते, T3 G2-4 प्राप्यते (for प्राप्नुते) B3 4 Dn2 D10 तावत्फ (Dn2 °त्का)ल प्राप्य स गोप्रदानात् — [c]) D5 6 9 सम ग्रम् (for च सर्वम्) — After 29, T2 reads 31[cd]

30 G1 partly damaged — [a]) D5 धाम (for -चारु) T1 M शृङ्गा (for शृङ्गीं) — [b]) T G2-4 वसनोत्तरीया (for द्रविणो) — [c]) B1 D5 धेनूम्

31 [a]) B1 4 D1. 2 T1 G2 मानव (for °व) V1 B Dn D2 4. 10 -निरुद्ध (for निबद्ध) — [b]) T1 महाघ कारे (for तीव्रान्ध°) B1 D3 om नरके — T2 reads 31[cd] after 29 — [c]) D1-4 6-9 T G महार्णवान् (for °र्णवे) B1 D1-2. 7 8 M1-3 वातयुक्ता, D4 6 5 वात युक्ता (for वायुयुक्ता) — [d]) D. गोवदन (for दान गवां)

32 [a]) B1 D3 च ददाति, D1 2 ददते च, D1-3 तु करोति (for तु ददाति) — [b]) D1 भूमिप, D2-6 भूप (for विप्रे) — [c]) D1-2 दान, D4-7 8 द्रव्य, D5 10 भार्यं, S वित्त (for चान्नं) V1 दयश (for च यश्च)

33 [a]) D4 6-8 नैवेशक ✣ Cn नैवेशिक गृहोपस्कर शय्यादि । ✣ — [b]) D3 transp वै and यस्तु D1-3 यश्चैव (for वै यस्तु) D1-2 पुत्रो (for तु नरो) — [c]) V1 B1 3 Dn1 n2 -चारित्र- (for त्र)

34 [a]) V1 B2-4 Dn D10 गवा तथा वै, D1-4 6-9

धुर्यप्रदानेन गवां तथाश्वै-
लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुर्हि हिरण्यदानं
ततो विशिष्टं कनकप्रदानम् ॥ ३४
छत्रप्रदानेन गृहं वरिष्ठं
यानं तथोपानहसंप्रदाने ।
वस्त्रप्रदानेन फलं सुरूपं
गन्धप्रदाने सुरभिर्नरः स्यात् ॥ ३५
पुष्पोपगं वाथ फलोपगं वा
यः पादपं स्पर्शयते द्विजाय ।
स स्त्रीसमृद्धं बहुरत्नपूर्णं
लभत्ययत्नोपगतं गृहं वै ॥ ३६

भक्षान्नपानीयरसप्रदाता
सर्वानवाप्नोति रसान्प्रकामम् ।
प्रतिश्रयाच्छादनसंप्रदाता
प्राप्नोति तानेव न संशयोऽत्र ॥ ३७
स्रग्धूपगन्धान्यनुलेपनानि
स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोग-
स्तथाभिरूपश्च नरेन्द्रलोके ॥ ३८
बीजैरशून्यं शयनैरुपेतं
दद्याद्गृहं यः पुरुषो द्विजाय ।
पुण्याभिरामं बहुरत्नपूर्णं
लभत्यधिष्ठानवरं स राजन् ॥ ३९

---

तथा गवाश्वैर्: D6 गवां च लोकान्, T1 M गवा तथाश्वै (T1 °श्वाश्चैः) (for गवा तथाश्वैर्) — b) D6 om नरो वसू D6 सप्राप्यते चैव तथा वसुना. — c) V1 B Dn1 n2 D6 चाहुस्तु, Dn3 D4 चाहुस्तु, D6 7 चाहु स्व (for चाहुर्हि) D5 दाना (for दान) D8 10 स्वर्गापवर्गस्तु हिरण्यदान — M4 om (hapl) 34d D8 repeats 34d after 35ab — d) D5 om (hapl) from विशिष्ट up to गृह (in 35a) D4 वसिष्ट (for विशिष्ट)

35 D5 om up to गृह (in 35a) (cf v l 34) — a) D10 फल (for छत्र) D1 8-9 T2 G1 3 4 विशिष्ट (for वरिष्ठ) D2 छत्रप्रदाने तु गृह विशिष्ट — b) D1-3 [उ]पानहो (for °नह) T1 सप्रदानात् (for °दाने) — After 35ab, D3 repeats 34d — c) T1 प्रदानस्य, M1-3 °ने च (for °नेन) V1 B2 3 Dn3 वपु, D8 फल (for फलं) V1 B1 2 4 5 Dn1 n2 D4 5 T1 2 G1 2 स्व (for सु) D6 8 वसुप्रदाने च फल सुरूप — d) V1 B Dn D10 प्रदानात् (for °ने)

36 a) D4 M1 2 [अ]पि (for [अ]थ) D2 पुष्पोपयुक्तफलपत्रपूर्णं, D5 10 °गधाद्यफलोपगध — c) Bom ed and Kumbh ed सश्रीकमृद्ध (for स स्त्रीस°) — d) D8 लभेद् (for लभति) D1 2 M1 2 4 नत, D5 चित (for गत) G2 इव वै, G4 गृहेश्वं (for गृह वै) D1 6-9 लभेत्प्रयत्नोपचित गृह वै — For 36cd, T1 subst.

330* लभेत काम स भवेदरोग
तथा सुरूपश्च नरेन्द्रलोके ।
[ Cf 35cd ]

37 a) V1 B2 3 Dn1 n2 D1 2 4 G1-3 भक्ष्यान्न, G1 भिक्षान्न (for भ°). D1 6-9 प्रदानात् (for °ता) T1 भक्ष्याग्रपानादिरसप्रदाता — b) V1 B Dn D8 10 M समाप्नोति (for अवा°) G3 om ति रसान्प्रकामम् D5 om (hapl) from रसान् up to प्राप्नोति (in 37d) D3 प्रदाता (for प्रकामम्) — d) V1 B Dn D10 तान्येव (for तानेव) D5 प्राप्नोति सर्वांश्च मनोरथांश्च

38 a) T G M4 मधूप (for स्रग्धूप-) V1 Dn2 n3 D8 गधान (for गन्धानि) B2 स्रग्गंधधूपानुलेपनानि, D1 8 स(D8 सु)गधधूपाद्यनु°, D4 स्रगधलेपान्य°, D5 स्रग्भूषणान्येव सुले°, M1-3 सुधूपगधाद्यनु° — b) D7 om, G2 स्नानीय- (for स्नानानि) M4 [अ]य (for य) — T1 om (hapl ?) 38c-40b — c) D5 निरोग्य (for अरोगस्) — d) D2 7 10 [अ]पि, T2 3 G2-4 M सु, G1 स (for [अ]भि) D1-3 कल्प (for लोके)

39 T1 om 39 (cf v l 38) — a) M शरणैर् (for शयनैर्) — b) M4 कृत (for गृह) G2 यत् (for य) D1 6 शयन (for पुरुषो) — D6 om (hapl) 39c-40b — c) D1-4 6-9 सुलयाभि (for पुण्याभि) T2 3 G1 3 पुण्य (for -पूर्णं) — d) B1 भवति, D1-4 6-9 T2 लभेद् (for लभति) B3 सुराज्यं, D10 च राज्यं (for स राजन्)

सुगन्धचित्रास्तरणोपपन्नं
दद्यान्नरो यः शयनं द्विजाय ।
रूपान्विता पक्षवती मनोज्ञां
भार्यामयत्नोपगतां लभेत्सः ॥ ४०
पितामहस्यानुचरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते तस्मादित्याहुः परमर्षयः ॥ ४१

वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः ।
नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ॥ ४२
ततो युधिष्ठिरः प्राह पाण्डवान्भरतर्षभ ।
पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ॥ ४३
ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी ।
युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ॥ ४४

इति श्रीमहाभारते अनुशासनपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## ५८

युधिष्ठिर उवाच ।
यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुंगव ॥ १
कौतूहलं हि परमं तत्र मे वर्तते प्रभो ।

C. 13 3004
B 13 59 2
K 13.94 2
M 13 49 2

---

40 T1 om 40ab (cf v 1 38) D. om 40ab (cf v 1 39) —a) D1-3 सुगाधि (for सुगन्ध) V1 B Dn D2 10 सुगन्ध (B1 D2 10 °धि) चित्राम्बरणोपधान, D1 e-3 सुगाधिचित्राभरणोपपन्न —b) B2 partly damaged G2 [ऽ]न्य (for य) T 2 G1-2 सदन, M1 शरण (for शयन) —c) B1 मन्यवर्णी, G3 पक्ष्य° (for पक्ष°) ∼ Cn पत्रवतीं महाकुलोत्पन्नाम्। ❀ —d) B2 (marg) अपत्योपचिता, D1 e 1 अयत्नोपचिता (for °गता) D10 लभेत स, S लभेत (for °त्स)

41 a) V1 B5 Dn [ग]न्नरो (for [अ]नुचरो) —c) G1 partly damaged V1 B1 2 Dn D3 T2 2 G1 2 4 यस्माद् (for त°) — After 41, Dn2 D1 e-9 ins

331* पुस्तकं च तथा गाव कन्या दान तथैव च ।
ये न दास्यन्ति पुण्यात्मेषा मौर्ग्यं परेण किम् ।

[(L 1) D1 यथा (for तथा) —(L 2) Dn2 कुतो भवेत् (for परेण किम्) ]

42 D2 om 42-44 —b) V1 De 1 T2 2 G1-3 नंदन —c) Dn2 D1 4 c 8 9 T2 रोमयेद (for ऽरोचयद्)

43 D2 om 43 (cf v 1 42) —b) V1 B Dn D10 M1 पुरुषर्षभ (Dn2 M1 °भ), D1 6 G2 4 भरतर्षभ —c) G1 damaged D1 1 10 तद् (for यद्) —d) G2 हि, M1-2 वै (for वो) G2 प्रभो D1 e 7 9 आरो विग्नुतेति च (D1 5 वा), D5 11 T2 2 G3 M1 तद्ध (T2 2 G3 °द्धो) रोचयति प्रभो (T2 M1 °भु), G1 2 4 वाचयति प्रभो, G1 अरोचयदिति प्रभु

44 D1 om 44 (cf v 1 42) —a) T1 च (for तु) D1-5 तत पाडुसुता सर्वे —d) D1 8 10 [अ]भि (D10 °ति) पूजयन्, T2 [तु]व पू° (for [अ]भ्यपू°)

Colophon —*Parvan name* B1 4 Dn2 D1 शांति —*Sub parvan* V1 B1 2-4 Dn D1 2 4-10 M दानधर्म —*Adhy name* B1 दानमाहात्म्यतपस्यादिवर्णन, D2 यम नियमफलानि, D3 यमफलानि D5 दानप्रशसा, T2 दान प्रकरणे भीष्मयुधिष्ठिरसंवादे सर्वदानपरिपाककथन —*Adhy no* (figures, words or both) V1 57 (as in text), D5 54, D10 61, T1 M 86, T2 3 G2 4 93, G1 88, G3 87 —After 13 57, V1 B Dn D2-4 8 10 Cal ed Bom ed Kumbh ed read 13 99

## 58

1 V1 G2 om the ref —a) B3 हि विद्वांसो, T1 बहून्यत्र (for बहिर्वेद्यां) —c) M1 3 तं (for किं) —d) S मन्यसे (for मत ते) D1 8 9 पुरुषर्षभ, D1-7 भरतर्षभ, T2 कुरुनंदन (for °पुगव) D1 3 सतत भरतर्षभ

दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे ॥ २

भीष्म उवाच ।

अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहम् ।
यच्चाभिलषितं दद्यात्तृषितायाभियाचते ॥ ३
दत्तं मन्येत यद्दत्त्वा तद्दानं श्रेष्ठमुच्यते ।
दत्तं दातारमन्वेति यद्दानं भरतर्षभ ॥ ४
हिरण्यदानं गोदानं पृथिवीदानमेव च ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥ ५
एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा ।
दानानि हि नरं पापान्मोक्षयन्ति न संशयः ॥ ६
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ७
प्रियाणि लभते लोके प्रियदः प्रियकृत्तथा ।
प्रियो भवति भूतानामिह चैव परत्र च ॥ ८
याचमानममीमानादाशावन्तमकिंचनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ ९
अमित्रमपि चेद्दीनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ १०
कृशाय ह्रीमते तात वृत्तिक्षीणाय सीदते ।
अपहन्यात्क्षुधं यस्तु न तेन पुरुषः समः ॥ ११

---

2 T1 om 2[ab] — [a]) D5 तु (for हि) — [b]) D2 4 6-8 10 T3 G M अत्र, D5 यत्र, T2 श्रोतुं (for तत्र) D2 T3 G1 3 4 ते (for मे) V1 B Dn विद्यते (for वर्तते) D10 T2 3 G1-3 M विभो (for प्रभो) — D9 om (hapl) 2[c]–4[b] Before 2[cd], T2 3 G ins भीष्म — [c]) B3 दानम्, D7 (sup lin) T2 दानम् (for दत्तम्) — [d]) D5-7 प्रचक्षते (for °क्ष्व मे) T2, 3 G तद्दान भरतर्षभ

3 D9 om 3 (cf v 1 2) T2 3 G om the ref D1 श्रीभगवान् (for भीष्म) — [a]) D1 5 सर्वेभ्यो (for भूतेभ्यो) — [b]) V1 B5 D3 4 T3 G2-4 वा (for च) V1 B1 3 5 Dn1 n2 D4 6-8 10 T2 3 G [अ]नुग्रह D5 व्यसने चाप्यनुग्रह — [c]) D8 10 M3 यथाभि (for यच्चाभि) B1 D1 2 लपते, D4 लक्षितं (for लषितं) — [d]) D5 द्विजाग्र्याय (for तृषिताय) D10 [अ]लि- (for [अ]भि)

4 D9 om 4[ab] (cf v 1 2) T1 M1-3 repeat 4[ab] after 4 — [a]) T1 M1-3 (all first time) 4 तृस (for दत्त) B1 यद्दान, D1 य दत्त्वा (for यद्दत्त्वा) D5 दत्तमन्वेति यद्दानं, D10 T1 (second time) 2 3 G M1-3 (last three second time) भरणे पुत्रदाराणा — T2 3 G om 4[cd] — [c]) D1 2 चाहारम् (for दाता°) — [d]) B1 D1 2 3 5 तद्; D7 न (for यद्) D10 दानं भरतसत्तम

5 [b]) B3 पृथ्वीदानमथापि च — [d]) D1 3 दुष्कृतीन्, D4 दुष्कृत, D5 10 T2 G2 दुष्कृतान्, T3 G1 3 4 दुष्कृतात्, some MSS दुष्कृत

6 [a]) T1 एतानि वै पवित्राणि (= 5[c]) — [b]) B5 सर्वदा, D1-3 5 नित्यश (for °दा) — [cd]) S एतानि (for दानानि) T1 परात्, M4 पर (for नर) D4, 6-9 ददाति हि नर पापात्स मुच्येत न संशय

7 D4 om (hapl) 7[b]–8[a] — [b]) D2 3 [अ]स्ति, D6-9 [अ]पि (for [अ]स्य)

8 D4 om 8[a] (cf v 1 7) — [a]) V1 B Dn1 n2 D10 नित्यं (for लोके) — [b]) D3 प्रियकृत्, D10 न प्रिये (for प्रियद) D1-3 सदा, D6-9 तदा (for तथा) — [c]) Dn1 भूतानि, D8 लोकानि (for भूतानाम्) — [d]) D6 G2 [ए]व च (by transp), M3 लोके

9 [a]) V1 अमीमानो, B1 अभिमानाद्; D1 5 अमीयानम्, T1 अमान च, G2 M अमानाच्च (for अमीमानाद्) T2 3 G1 3 4 याचमानावमानाच्च — [b]) V1 दानशक्तम्, B Dn D8 10 अनामक्तम् (for आशावन्तम्) — [c]) D7 [अ]र्चयेद् (for [अ]र्चति) D10 यथाशक्त्या (for °शक्ति)

10 [c]) D5 व्यसनेभ्यो (for °ने यो) — [d]) In D7 the portion from रूपसत्तम up to धर्मं स्त्री (in 29[ab]) is lost on a missing folio G1 3 उत्तम (for स)

11 D7 missing (cf v 1 10) D1 5 om (hapl) 11 — [a]) D6 om, D3 नित्य (for तात) V1 B2 कृशाय कृशवित्ताय, B1 2 (marg) 3-5 Dn1 n2 °य कृतविद्या (B1 3 4 °त्ता)य, Dn3 D10 °य हतवित्ताय — [b]) Dn3 रुग्णाय, D3 6 8 9 ग्लानाय, M4 (inf lin) हीनाय (for क्षीणाय) D1 2 वृत्तिग्ला (D1 °म्ला) नायसीदति (sic) — [c]) V1 B Dn1 n2 D8 क्षुधां (for

ह्रिया तु नियतान्साधून्पुत्रदारैश्च कर्शितान् ।
अयाचमानान्कौन्तेय सर्वोपायैर्निमन्त्रय ॥ १२
आशिषं ये न देवेषु न मर्त्येषु च कुर्वते ।
अर्हन्तो नित्यसत्त्वस्था यथालब्धोपजीविनः ॥ १३
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत ।
तान्युक्तैरुपजिज्ञास्य तथा द्विजवरोत्तमान् ॥ १४
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः ॥ १५
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥ १६
विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्यजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ॥ १७
तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च ।
यत्करिष्यसि कल्याण तत्त्वा लोकेषु धास्यति ॥ १८
यथाग्निहोत्रं सुहुतं सायं प्रातर्द्विजातिना ।
तथा भवति दत्तं वै द्विजेभ्योऽथ कृतात्मना ॥ १९
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम् ॥ २०

C 13 3022
B 13 59 20
K 13 94 20
M 13 49 19

---

क्षुधं ) — $^{d}$ ) T1 स वै पुष्पसत्तम

12 D- missing ( cf v 1 10 ) G1 partly damaged — $^{a}$ ) Dn3 D5 नियमितान ( for तु निय° ) V1 B Dn1 n2 D10 त्रियानि( V1 श्रिया नि )यमितान्साधून्, T1 समुपेतान्ह्रिया सा° — $^{b}$ ) G1 तु ( for च ) D1 2 दर्शनाद, D8 धर्षितान, some MSS कर्षि° ( for कर्शि° ) — $^{c}$ ) B1 कौरव्य ( for कौन्तेय ) — $^{d}$ ) D3 पूर्वोपायैर् ( for सर्वो° ) V1 B D3 10 T2 3 G1 निमन्त्रयेत्, D2 °न्त्रिता ( for निमन्त्रय )

13 D7 missing ( cf v 1 10 ) G1 damaged D4 om. 13$^{ab}$ — $^{a}$ ) S ह्याशिषो ( for °षं ) T1 मर्त्येषु ( for देवेषु ) — $^{b}$ ) V1 B Dn M1 च मर्त्येषु ( by transp ), T1 देवेषु च G1 om , M1-3 तु ( for च ) D2 9 वर्तते ( for कुर्वते ) — $^{c}$ ) B2 अहिंसा , D4 9 अर्हतो, D- अर्चाया, T1 स्नात ( for अर्हन्तो ) Dn1 n2 -संतुष्टा, T2 सत्त्वस्थान् ( for सत्त्वस्था ) D6 अतो नियमसत्त्वस्था — $^{d}$ ) Dn1 n2 D2 तथा ( for यथा ) B1 T2 G3 4 -सर्वोप ( for लब्धोप )

14 D7 missing ( cf v 1 10 ) G1 damaged D4 T2 om ( hapl ) 14$^{a}$–17$^{b}$ — $^{a}$ ) D समाश्रेते ( for समेभ्यश्च ) — $^{b}$ ) D1-2 2 8 विस्यम्व, D- युध्यम्व ( for रक्षस्व ) — T1 om 14$^{c}$–15$^{d}$ — $^{c}$ ) V1 Dn1 Cnp तान्मुर्क्तैर्, B2 इत्यु , D10 नायु ( for तान्यु ) M1-3 विज्ञाप्य ( for जिज्ञास्य ) — $^{d}$ ) D2 3 यथा ( for तथा ) D9 तथा वरद्विजोत्तमान, T3 G M भोगैर्निवेष रक्ष च

15 =( var ) 13 59 12 D7 missing ( cf. v 1 10 ) D4 T1 2 om 15 ( cf v 1 14 ) — $^{b}$ ) B2 पुरस्यैः ( for सप्रेष्यैः ) — $^{d}$ ) T3 G भूत ( for काम )

16 = ( var ) 13 59 13 D7 missing ( cf. v 1 10 ) D4 T- om 16 ( cf v 1 14 ) — $^{d}$ ) D1 2 6 कर्मण , T1 धर्मिण ( for कर्मिण )

17 D7 missing ( cf v 1 10 ) D4 T2 om 17$^{ab}$ ( cf v 1 14 ) — $^{a}$ ) T1 वेदविद्या ( for विद्यास्नाता ) — $^{b}$ ) V1 B1 व्यपाश्रित ( for °त्य ) D1 2 - अव्यपाश्रित्य जीविन , D • 9 अधपपाश्रित्य जी , T1 3 G M1 2 4 धर्ममाश्रित्य जी° — $^{c}$ ) V1 -निरता ( for -तपसो )

18 D7 missing ( cf v 1 10 ) — $^{a}$ ) Dn1 श्रद्धेषु, D2 9 वृ° ( for शु° ) — $^{b}$ ) V1 B Dn D10 स्वदारपरितोषिषु — $^{c}$ ) D1 6 T- 2 G1-2 करिष्यति ( for °सि ) — $^{d}$ ) Dn3 तत्ते, D1 T1 तरवा, D3 तत्त्व, D6 8 9 तथा, D10 T2 3 G तत्तत् ( for तत्त्वा ) V1 B1-2 3 धास्यते, B1 साध्यते, D1-6 8-10 T1 2 G1 2 4 यास्यति ( for धा° ) Dn1 n2 तत्ते लोके युधा पते

19 D7 missing ( cf v 1 10 ) — $^{a}$ ) G1 तथा ( for यथा ) — $^{b}$ ) S त्रिजानता ( for द्विजातिना ) — D- om ( hapl ) 19$^{cd}$ — $^{c}$ ) V1 B Dn D10 तथा दत्त द्विजातिभ्यो — $^{d}$ ) S विद्वद्भ्यो ( for द्विजेभ्यो ) V1 B Dn D10 भवत्यथ ( D10 °वेत्पार्थ ) यतात्मसु

20 =( var ) 13 59 19 D7 missing ( cf v 1 10 ) — $^{a}$ ) T1 वै, T2 G M1 नो, Madras ed भो ( for ते ) T2 त्रिदितो ( for विततो ) D- येषु ते विहितो यज्ञ — $^{b}$ ) B1 2 4 D1 6 8 10 सु ( for स ) — T1 om 20$^{cd}$ — $^{c}$ ) D1 6 8 यज्ञेषु ( for ज्ञेभ्यो ) — $^{d}$ ) D2 6 वर्तते, D1 6 8 9 S ( T1 om ) वर्धतां ( for वर्तताम् )

21 D7 missing ( cf v 1 10 ) — $^{a}$ ) B3 निवसन्, D1-6 9 निवापो, T1 3 G1 M निर्वेदो, G1 damaged ( for निवापो ) V1 B3 M1 महिलस्, D10 सुभ्रुशस्,

निवपो दानसदृशस्तादृशेषु युधिष्ठिर ।
निवपन्पूजयंश्चैव तेष्वानृण्यं निगच्छति ॥ २१
य एव नो न कुप्यन्ति न लुभ्यन्ति तृणेष्वपि ।
त एव नः पूज्यतमा ये चान्ये प्रियवादिनः ॥ २२
ये नो न बहु मन्यन्ते न प्रवर्तन्ति चापरे ।
पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाभयम् ॥ २३
ऋत्विक्पुरोहिताचार्या मृदुब्रह्मधरा हि ते ।
क्षत्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे ॥ २४
अस्ति मे बलवानस्मि राजास्मीति युधिष्ठिर ।
ब्राह्मणान्मा स्म पर्यश्नीर्वासोभिरशनेन च ॥ २५
यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता ॥ २६
नमस्कार्यास्त्वया विप्रा वर्तमाना यथातथम् ।
यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ॥ २७
को ह्यन्यः सुप्रसादानां सुहृदामल्पतोषिणाम् ।
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ॥ २८
यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः ।
स देवः सा गतिर्नान्या तथास्माकं द्विजातयः ॥ २९

---

$T_1$ om ( for सदृशम् ) Dn निवापदानसलिलस् —$^{b}$) $T_2$ $_3$ G सदृशेषु ( for ता° ) —$^{c}$) $B_1$ $_4$ Dn निवसन, $D_{1,4-6}$ $_8$ $_9$ निर्वपन्, T $G_{2}$ $_4$ नि( $T_1$ वि )वदन्; $G_3$ निवेदयन् ( hypermetric ) ( for निवपन् ) $T_2$ $_3$ $G_1$ [ए]नं, $G_4$ [ए]नान ( for [ए]व ) $B_1$ निवसन्पूजितश्चैव, M निवेदयन्पूजयश्च —$^{d}$) $V_1$ B Dn $D_{10}$ नियच्छति, $T_2$ $G_4$ न ग° ( for निग° )

22 $D_7$ missing ( cf v l 10 ) —$^{a}$) $M_{1}$ $_2$ $_4$ एव ( for एव ) $V_1$ B $D_3$ $G_2$ नैव, $D_5$ मेद ( for नो न ) $D_{3-6}$ $_9$ कुप्यंते Dn $D_{10}$ T $G_1$ $_3$ $_4$ य ( $Dn_1$ त ) एव नैव ( $T_1$ च न ) कुप्यते ( $Dn_2$ °ति ) —$^{b}$) $Dn_1$ $T_3$ G लुपनि, $D_4$ $_5$ $_8$ $_9$ लुभ्यते, $T_2$ $M_4$ लुप्यति ( for लुभ्यन्ति ) —$^{c}$) $V_1$ य एव न, $D_1$ $_2$ तत एव, $D_3$ तत एव ते ( hypermetric ), $T_2$ लोके के न ( for त एव न ) —$^{d}$) $V_1$ B Dn $D_{10}$ [अ]पि ( for [अ]न्ये ) $T_2$ प्रीतिं ( for प्रिय- )

23 $D_7$ missing ( cf v l 10 ) —$^{a}$) $Dn_1$ $n_2$ एते ( for ये नो ) —$^{b}$) $D_4$ $_5$ $_{10}$ $T_1$ $_3$ G M याचने, $D_6$ पावने, $D_3$ घा धने ( for चापरे ) —$^{c}$) $D_{10}$ प्रति ( for परि ) $D_6$ पाल्येत ( for पाल्यास्ते ) —$^{d}$) $D_{1-3}$ तादृशेभ्यस् ( for नमस्तेभ्यस् ) $B_1$ $_3$ ततो; $T_2$ तदा ( for तथा ) $V_1$ $B_{3-4}$ $T_2$ Cnp [उ]भय $D_4$ $_6$ $_{8-10}$ तादृशेभ्य प्रदा( $D_{10}$ °भ्यस्तु दा )पयेत्, $D_5$ तेभ्यस्तु सर्वदापयेत् ( sic ) ❀ Cn उभयमिति पाठे तेभ्यस्तुष्टेभ्यो रुष्टेभ्यश्च उभय स्वर्गो नरकश्च भवतीति शेष । ❀

24 $D_7$ missing ( cf v l 10 ) —$^{b}$) $D_4$ धरो, $D_{10}$ धना ( for -धरा ) $D_{1-3}$ मृदुब्रह्मपुरोहिता ; S मृदुधर्मपरा हि ये — $T_1$ om $24^{cd}$ —$^{c}$) $V_1$ B Dn $D_2$ $_6$ क्षात्रेण, $T_3$ $G_1$ $_3$ $_4$ $M_4$ क्षे° ( for क्ष° ) $D_3$ [अ]पिहित ( hypermetric ), $D_4$ $_6$ $_8$ $_9$ तद्धि, $M_{1-3}$ हि न, $M_4$ [अ]पि न ( for [अ]पि हि ) $D_3$ $T_3$ G संस्पृष्टं ( for ससृष्ट ) $T_2$ क्षेत्राणा हि न सस्पृष्ट —$^{d}$) $D_{1-3}$ $_5$ वै प्रभो, $D_{10}$ S ( $T_1$ om ) तेष्वपि ( for वै द्विजे ) $D_4$ $_6$ $_9$ तेजस्तेपा विधीयते

25 $D_7$ missing ( cf. v l 10 ) —$^{a}$) S ईश्वरो ( for अस्ति मे ) —$^{b}$) $D_{10}$ [अ]स्मि च, $G_2$ चास्मि ( for [अ]स्मीति ) —$^{c}$) $B_1$ M पर्यश्वा, $B_3$ $_4$ °स्या, $T_3$ G पर्यासीर् ( for पर्यश्नीर् ) $D_{1-6}$ $_{8-10}$ ब्राह्मणान्पूजयेथास्त्वं, $T_1$ °णाश्नावमन्येथास्, $T_2$ णान्स्म सपर्याभिर् —$^{d}$) $T_2$ $_3$ $G_1$ $_2$ ( *inf lin* ) $_3$ $_4$ M वा ( for च ) $D_4$ $_5$ $_8$ $_9$ वासोभिरशनैर्धनै, $D_6$ °भि शयनैर्धनै, $T_1$ तेज शाम्यति तेष्वपि ( = $24^{d}$ )

26 $D_7$ missing ( cf v l 10 ) $T_1$ om 26 —$^{a}$) $G_2$ यच्चेहार्थं परार्थं वा —$^{b}$) $D_5$ वाह्वित्तमस्ति तेनघ —$^{d}$) $D_6$ $_9$ स्वधर्मान् ( for °र्मम् )

27 $D_7$ missing ( cf v l 10 ) —$^{a}$) $V_1$ B Dn $D_{10}$ तथा, $T_2$ यथा ( for त्वया ) —$^{b}$) $B_3$ $D_{10}$ यथा सुख, $D_6$ $_9$ $M_1$ °तथा ( for °तथम् ) —$^{c}$) $B_3$ तथोत्साह —$^{d}$) $V_1$ $D_6$ $_{8-10}$ $T_2$ $_3$ G $M_1$ लभतु, $B_1$ $_4$ मदतु, $D_{1-3}$ लढतु, $M_2$ $_3$ कलंतु, $M_4$ लाळतु ( for ललन्तु ) $B_3$ om पुत्रवत्

28 $D_7$ missing ( cf v l 10 ) $T_1$ om 28 —$^{a}$) $V_1$ $B_{2-3}$ $Dn_1$ $n_2$ [अ]क्षय ; $D_5$ [अ]न्यस्तु ( for [अ]न्य सु ) $Dn_3$ को ह्यक्षयप्रदानाना ( marg °प्रसादाना as in text ) —$^{b}$) $Dn_3$ भाषिणा ( for -तोषिणाम् ) —$^{c}$) $M_{1-3}$ वृत्तम् ( for वृत्तिम् ) $V_1$ B Dn $D_6$ $_{10}$ [अ]वक्षेप्तुं, $D_9$ [अ]प° ( for [उ]प° )

29 $D_7$ missing up to धर्मं स्त्री ( in $29^{ab}$ ) ( cf v l 10 ) —$^{b}$) $D_{1-3}$ युधिष्ठिर, $M_4$ सनातन ( for

यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः ।
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ॥ ३०
अवेदानामकीर्तीनामलोकानामयज्वनाम् ।
कोऽस्माकं जीवितेनार्थस्तद्धि नो ब्राह्मणाश्रयम् ॥ ३१
अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः ।
राजन्यो ब्राह्मणं राजन्पुरा परिचचार ह ।
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः ॥ ३२
दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च ॥ ३३
मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान् ।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् ॥ ३४
अपरेषां परेषां च परेभ्यश्चैव ये परे ।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ ३५
न मे पिता प्रियतरो न त्वं तात तथा प्रियः ।
न मे पितुः पिता राजन्न चात्मा न च जीवितम् ॥ ३६
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन ।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ॥ ३७
ब्रवीमि सत्यमेतच्च यथाहं पाण्डुनन्दन ।
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः ॥ ३८
पश्येयं च सतां लोकाञ्शुचीन्ब्रह्मपुरस्कृतान् ।
तत्र मे तात गन्तव्यमह्नाय च चिराय च ॥ ३९

C. III 3042
B 13. 59. 40
K 13. 94. 39
M 13. 49. 39

---

°ह्न ) — ᶜ) V1 B Dn D 8 10 M4 सदैव (for स °ैव) D 8 T1 स, G4 सु (for सा) T1 M1-8 नान्यस्, G2 मान्या (for नान्या) T2 यथैव स्वागत मान्यास्, T3 G1 3 तदेव सुराविर्ना T4 त ना न्या — ᵈ) Dn1 यथा (for तथा) B4 द्विजोत्तम (for द्विजातय)

30 ᵈ) D5 तत्परं, M1 सतत (for स ) B1 ब्राह्मणे, T1 G4 क्षत्रिय (for °ये)

31 ᵃ) V1 B Dn D1-10 अयज्वानाम् (for अकीर्ती) — ᵇ) M अन्नानानाम् (for अलोका ) V1 B Dn3 D1-10 Cnp अकीर्तिना, Dn1 n2 अकीर्ति (for अयज्व ) — ᶜ) V1 B Dn D° 10 तेषां, D1-7 8 तदा, S नु स्यात् (for ऽस्माक ) — ᵈ) V1 B1 ᐧ ᐧ त विना, B2 4 Dn3 D10 तद्विना, Dn1 n2 त्वां विना (for तद्धि नो) D1 6-9 सिद्धिर्नो (D7 सेविनो) ब्राह्मणाश्रया, T2 तद्धि नो ब्राह्मणाश्रया

32 ᵃ) V1 तत्र, B4 अथ (for अत्र) D1-8 वर्ण यिष्यामि (for वर्त ) — ᵇ) D5 T1 धर्म (for धर्मः) S पुरातन (T1 M4 °न) (for सनातन ) V1 B Dn D10 यथा धर्म सनातन D5 यथा धर्मा सनातना — ᵉ) V1 B Dn D 10 ब्राह्मणान — ᶠ) D10 [पु]व, M4 [आ]द (for [पु]व ) — ᶠ) B1 S (except G1) स्थिति, D6 श्रुत, D10 श्रुत (for श्रुति )

33 ᵃ) D. G4 [उ]पचार्यो — ᶜ) V1 B Dn D1 2 4 6-10 T3 सम्पर्शं, T1 सम्पृष्ट्वा, G3 M सम्पर्शं (for संस्पृश्य) B4 प्रतिचर्यस् (for परि ) — ᵈ) D6 7 9 वैश्यो न (for वैश्येन) D5 तु (for च)

34 ᵃ) D10 स्नातान् (for °शीलान्) — ᵇ) V1 B3 धर्मार्थ (for धर्मानु ) Dn3 D. पालनान् (for °कान्) T2 क्षमाशीलानुपालकान्, T3 G1 2 4 सत्यशीला( G4 °भावा )नुपालकान्, G3 सत्यधर्मानुपालनान् — ᵈ) T2 °चरितान् (for °चरत) G तानुपाचर तान्द्विजान्

35 T1 om 35ᵃᵇ — ᵃ) G3 परेषामपरेषां च — ᵇ) V1 B Dn D5 8 10 [क्ष]पि (for [पु]व) — ᶜ) T8 damaged T2 G1 3 4 प्रभाव च, G3 प्रताप च (for प्रतपता) — ᵈ) S (T3 damaged) तेजांसि च तपांसि च (= 35ᶠ) — ᵉ) B1 D10 G2 M4 शाम्यते, T3 8 G1 2 4 मन्यते (for शाम्यन्ति) B3 ब्राह्मणं प्राप्य शाम्यति — ᶠ) D1-7 8 T1 बलानि (for तपांसि) T3 8 G M शौर्यवीर्यबलमेव च

36 ᵇ) D2 तु D2 च (for त्व) D3 भ्राता (for तात ) D5 G4 यथा (for तथा) G2 द्विज (for प्रिय )

37 T1 om 37 B3 reads 37ᵃᵇ twice — ᵃ) D6 तत्तश् (for त्वत्तश्) — ᶜ) T2 G M त्वया (for त्वत्तो) D7 मे, D10 च (for ऽपि) D7 वै (for मे) D10 G4 प्रियतमा (for °रा)

38 B3 om (hapl) 38ᶜ-40ᵇ — ᵃ) D. चो, D10 तु (for च) — ᵈ) V1 B1 3 4 Dn2 स शातनु, B2 Dn1 n2 च शा°, D तु शं (for स शं°)

39 B3 om 39 (cf v l 38) — ᵃ) D1-8 च शुभाल्लँ, D1 6-9 चेन्द्रुमाल्लँ, T1 सुकृताल्लँ (for च सता) — D1-8 om (hapl) 39ᵇ-40ᵃ — ᵇ) G4 ऋत्वान (for

सोऽहमेतादृशाँल्लोकान्दृष्ट्वा भरतसत्तम ।
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ॥ ४०

इति श्रीमहाभारते अनुशासनपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## ५९

युधिष्ठिर उवाच ।
यौ तु स्यातां चरणेनोपपन्नौ
यौ विद्यया सदृशौ जन्मना च ।
ताभ्यां दानं कतरस्मै विशिष्ट-
मयाचमानाय च याचते च ॥ १

भीष्म उवाच ।
श्रेयो वै याचतः पार्थ दत्तमाहुरयाचते ।
अर्हत्तमो वै धृतिमान्कृपणादधृतात्मनः ॥ २
क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः ।
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ॥ ३
याच्ञामाहुरनीशस्य अभिहारं च भारत ।
उद्वेजयति याचन्हि सदा भूतानि दस्युवत् ॥ ४
म्रियते याचमानो वै तमनु म्रियते ददत् ।
ददत्संजीवयत्येनमात्मानं च युधिष्ठिर ॥ ५

---

शुचीन्) D3 पुर सरान् (for पुरस्कृतान्) — T1 om $39^{c}$–$40^{b}$) — $^{d}$) B5 शिवाय च, G3 त्रिचारय (for चिराय च)

40 B3 om $40^{ab}$ (cf v l 38) D1–3 om $40^{a}$, T1 om $40^{ab}$ (for all, cf v l 39) — $^{ab}$) D4 दृष्ट्वा लोकान् (by transp), D6 7 दृष्ट्वा सदा B4 दृष्ट्वा च भरतर्षभ (for $40^{b}$) — $^{d}$) Madras ed कुप्ये (for तप्ये) D2 3 5 तेन तप्ये न पार्थिव, T1 तेन सत्येन पार्थिव

Colophon — *Parvan name* B1 2 4 Dn3 D1 3 शांति — *Sub parvan* V1 B Dn D1 2 6–10 M दान धर्म — *Adhy. name* Dn3 D1–9 ब्राह्मणप्रशंसा, T2 धर्मशास्त्रनिर्णये दानप्रकरणे सत्पात्रब्राह्मणनिरूपण, T3 G1 2 4 M1–3 ब्राह्मणस्तुति — *Adhy no* (figures, words or both) V1 59, D5 57, D10 63, T1 M 87, T2 3 G2 4 94, G1 3 88, G1 (*sup lin*) 89 — *Śloka no* D4 35

### 59

1 B1 om (hapl ?) 1 (retaining the ref) — $^{a}$) V1 B (B4 om) Dn D6 M4 च (for तु) — $^{c}$) B3 तेभ्यो (for ताभ्यां) V1 B (B4 om) Dn D10 T3 G4 कतमस्मै, D5 om, T1 कथमस्मै (for कतरस्मै) T2 ताभ्यां दान कतमस्मै प्रदेय — $^{d}$) D2 om the first च T2 विशिष्टमानाय च याचनेन

2 B4 युधिष्ठिर (for भीष्म) — $^{b}$) V1 B Dn D10 दानम् (for दत्तम्) D4 om from साहु up to तथा (in 13 60 $10^{f}$) — D3 om $2^{c}$–$3^{b}$ — $^{c}$) D1 2 6 अर्हत्तरो, T1 G M4 अर्हत्वरो, T2 3 M1–3 अर्हो नरो (for अर्हत्तमो) D6 om वै — $^{d}$) D5 कृपणान् D5 हि धृतात्मन, S (except M2) अकृता° (for अधृता°)

3 D4 om 3, D3 om $3^{ab}$ (for both, cf v l 2) — $^{a}$) B1 ब्राह्मण, T1 corrupt (for रक्षण) D1 2 5 क्षत्रियोपार्जनधृतिर् — $^{b}$) Dn3 D6 7 ब्राह्मणोनर्चनाधृति, D1 °णोनार्थनाधृति, D5 °णानामनाधृति, T1 2 G4 °णेनार्थिता धृति, T3 G3 M1–3 °णोनर्थिताधृति; G1 3 °णेन स्थितौ धृति, M4 °णेभ्यर्थनाधृति — $^{c}$) T1 द्युतिमान् (for धृति°) — $^{d}$) G2 प्रीणातु (for °ति) D1 2 9 G3 पुष्टिमान्, T1 दृष्टि° (for तुष्टि°) G4 वेदान्प्रीणाति पुष्टिमान्

4 D4 om 4 (cf v l 2) — $^{a}$) V1 B3 5 Dn3 (marg) याज्यम्; B3 4 D5 यज्ञम्, Dn1 n2 S याच्यम्, Dn3 वाच्यम् (for याच्ञाम्) — $^{b}$) D1 2 [अ]व्यतिहार, D3 व्यति°, D5 ह्यतिभार, D6–9 ह्यभिहा(D6 °चा)र, D10 अभिभार, T1 3 G2 4 मतिभारं; T2 G1 3 M1 3 4 मतिहार, M2 अति° (for अभि°) ❀ Cn अभिहार निरस्कारम् । ❀ — $^{c}$) V1 B2–5 Dn1 D7 G1–3 उद्वेजयति (for °यन्ति) B3 Dn1 n2 G2 (*inf lin* as in text) याचति, B4 याचता, D2 यात्रा हि; D5 यो हि सदा (hypermetric), D6 corrupt, D7–9 G1 3 याचा हि, T2 याचाभि (for याचन्हि)

आनृशंस्यं परो धर्मो याचते यत्प्रदीयते ।
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रय ॥ ६
यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः ।
भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ॥ ७
तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि ।
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ॥ ८
तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परंतप ।
ददद्बहुविधान्दायानुपच्छन्दानयाचताम् ॥ ९
यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम् ।
विद्यावेदव्रतवति तद्दानफलमुच्यते ॥ १०
विद्यावेदव्रतस्नातानव्यपाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान्संशितव्रतान् ॥ ११
कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौन्तेय कामैश्चान्यैर्द्विजोत्तमान् ॥ १२
अपि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धर्मज्ञाः सूक्ष्मदर्शिनः ॥ १३
अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान्गृहान् ।
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १४

C. 13 3058
B 13 60 15
K. 13 95 15
M 13 50 14

— $^{d}$) V1 B Dn2 यदा, D. सर्वं, D6 राज्ञा (for सदा)

5 D4 om 5 (cf. v l 2) — $^{a}$) D1-3 6-9 हि, D5 [s]पि (for वै) — $^{b}$) V1 B Dn D10 न जातु, D6-9 M तदनु (for वसनु) D6-9 T2 G1 3 ददन्न (for ददत्) — After $5^{ab}$, V1 reads $8^{ab}$, repeating it in its proper place — $^{c}$) G3 ददन्स, M1 °स्य (for °स्सं) D1 [प्र]वम् (for [प्र]नम्)

6 D4 om 6 (cf v l. 2) — $^{a}$) M1-3 आनृशंस्य — $^{b}$) D2 तद्, D3 च, T3 य (for यत्) B1 प्रदीयता (for °ते) — $^{c}$) D3 अयाचता, G3 त्वया चात (for अयाचत) D. अयाचत सीदमान — $^{d}$) V1 B1 . . . Dn D3 . 10 निमन्त्रयेत् (D5 यन्)

7 D4 om 7 (cf v l 2) Dn3 reads 7 after 332* — $^{a}$) B1 2 चैवादृशा, D6 वा तादृशे, T G M1 3 4 हे तादृशा (for वै ता°) V1 B राजन्, B1 4 Dn राष्ट्रान् (for राष्ट्रे) — $^{b}$) D3 द्विजर्षभा (for द्विजोत्तमा) T1 वसेयुर्द्विजसत्तमा

8 D4 om 8 (cf. v l 2) V1 reads $8^{ab}$ for the first time after $5^{ab}$ — $^{b}$) D. इमा (for अपि) — After $8^{ab}$, V1 B Dn2 n3 D5 10 ins

332* अपूज्यमाना कौरव्य पूजार्हास्ते तथाविधा ।

[ Dn2 n3 तु (for ते) D3 तपोधन (for तथाविधा) ]

— After the above, Dn3 reads 7 — $^{d}$) B5 समर्थिता (for °न्विता)

9 D4 om 9 (cf v l 2) T1 om 9 — $^{a}$) V1 D1-3 8 9 प्रयुंजीत T3 G4 थ (for °था) — $^{b}$) D2 प्रयत्नत (for परंतप) — $^{c}$) G3 corrupt. V1 T2 G1 ददन् D10 दोपान, T2 3 G1 3 4 M-3 देयान् (for दायान) — $^{d}$) V1 B2 (marg as in text) 3-5 Dn D5 उपा(B5 °प)गच्छन, D. M उपच्छदन (for च्छन्दान्) D6 M2 अयाचते (M2 °त) (for चताम्) D1-2 10 उपच्छदानयाचते (D10 °त), D7-9 उप(D9 पा)च्छन्दयाचने, T2 3 G2 4 उपच्छद(G4 दी)यते च तान

10 D4 om 10 (cf v l 2) — $^{a}$) D3 यदा, D10 यदि (for यद्) B3 होत्रेषु, D6 -होत्रेव सु- (hypermetric) (for -होत्रे सु) — D3 om (hapl.) $10^{cd}$ — $^{c}$) D5-9 वेदविद्या (for विद्यावेद-) D1 2 -व्रतवते (for °वति) T1 वेदविद्याव्रतवते — $^{d}$) D7 8 9 तद्दानात्, T2 G2 4 तद्दान (for तद्दान) D5 फलमानस्यमुच्यते, T1 M1-3 दान तत्फलमुच्यते

11 D4 om 11 (cf v l. 2) T1 om (hapl.) $11^{ab}$ — $^{b}$) D6 T2 3 G1-3 तद्व्यपाश्रय, M4 अव्यपाश्रित्य (for °श्रय) — $^{d}$) D5 ब्राह्मणान्व्रतशंसितान

12 =(var) 13 58 15 D4 om 12 (cf v l. 2) — $^{a}$) D7-9 दिव्यैं (for हृद्यै) — $^{b}$) T2, 3 G1 2 4 M सं (for स) — $^{c}$) Dn2 n3 D2 7 8 9 T2 3 G2 4 कौरव्य (for कौन्तेय) — $^{d}$) G2 कामैर्श (for कामैश्) D1 अन्यैर्, D. चाग्र्यैर् (for चान्यैर्) D6 om from द्विजोत्तमान् up to the end of this adhy

13 =(var) 13 58 16 D4 om 13 (cf. v l. 2) D6 om. 13 (cf v l 12) — $^{a}$) D10 चेत् (for ते) — $^{b}$) V1 B Dn D5 10 श्रद्धोपेत, G2 श्राद्धपूत (for श्रद्धा) — $^{c}$) M4 मन्येथास् (for मन्वाना) — $^{d}$) D5 7-9 रूपिण (for दर्शिन) M4 तद्रक्षादानपूजित

14 D4 om 14 (cf v l 2) D6 om. 14 (cf. v l 12) T1 om $14^{ab}$ — $^{b}$) V1 Dn3 D6 G1 2 4 M मोद्धरणा, D7-9 सुमनसो, T2 3 G2 सोद्धारणा (for सोद्धरणान्) — $^{c}$) D8 T2 ततान्, T3 एषा (for येषां),

अन्नानि प्रातःसवने नियता ब्रह्मचारिणः ।
ब्राह्मणास्तात भुञ्जानास्त्रेताग्नीन्प्रीणयन्तु ते ॥ १५
माध्यंदिनं ते सवनं ददतस्तात वर्तताम् ।
गा हिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥ १६
तृतीयं सवनं तत्ते वैश्वदेवं युधिष्ठिर ।
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छसि ॥ १७
अहिंसा सर्वभूतेभ्यः संविभागश्च सर्वशः ।
दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते ॥ १८
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो नित्यं तात प्रवर्तताम् ॥ १९

इति श्रीमहाभारते अनुशासनपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

# ६०

युधिष्ठिर उवाच ।
दानं यज्ञक्रिया चेह किंस्वित्प्रेत्य महाफलम् ।
कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा ॥ १
एतदिच्छामि विज्ञातुं याथातथ्येन भारत ।

---

D5 प्रदीयते (for प्रतीक्षन्ते) —[d]) D6 7 8 सुवृष्टिम् (for पर्जन्यम्) V1 कर्षणा, D3 कार्पका; D5 कार्पिका, D7-9 कर्पुका (for कर्षका)

15 D4 om 15 (cf v l 2) D5 om 15 (cf v l. 12). —[a]) T2 अश्नति (for अन्नानि) B4 अन्नानि प्रीता शरणे —[d]) M4 त्रेताग्निं (for °ग्नीन्) D6 T G4 प्रीणयति ते (T2 also हि), D10 °यत्सुत (for °यन्तु ते) V1 B Dn G2 त्रेता(V1 B1 3 4 तेना)ग्निं प्रीणय स्युव.

16 D4 om 16 (cf v l. 2). D6 om. 16 (cf v l 12) —[a]) V1 B1-3 Dn3 D2 5 मध्यंदिन (for माध्य°) D1-3 5 G2 M1-3 तु, D10 T G1 3 4 च, M4 तत् (for ते) —[b]) D10 ददस्तात प्रवर्धतां; S ददतस्ते विवर्धतां —[c]) B1 3 D5 7-10 M गा; B4 Dn T2 3 G3 4 गौर् (for गा)

17 D4 om 17 (cf v l. 2) D6 om 17 (cf v l. 12) —[a]) T1 G1 3 4 तृतीय V1 B Dn D5 10 ते वै (for तत्ते) —[c]) Dn1 च पितृभ्यो (by transp) —[d]) V1 om च B1 Dn1 D2 5 7 8 प्रयच्छति (D5 °त) D10 हव्यकव्ये प्रयच्छति

18 D4 om 18 (cf v l 2) D5 om 18 (cf v l 12) —[b]) B1 2 Dn1 भागश्च (for भागश्च) B4 पूर्वश, Dn1 n2 D10 भागशः (for सर्वशः) —[d]) V1 भवति, B1 5 Dn भवति (for °तु) D10 S भवंतु दद-(T1 M यज)तश्च ते (D10 T3 मे)

19 =(var) 13 58 20 D4 om 19 (cf v l 2) D6 om 19 (cf. v l 12) D10 om 19[ab] —[a]) M4 पितृतो (for विततो) —[c]) V1 B5 Dn यज्ञाना; D8 -भूतेभ्यो (for यज्ञेभ्यो) — After 19, T1 ins

333* यत्किंचित्पाण्डर पुष्प यत्किंचिदनुलेपनम् ।
अलक्ष्मीपरिहाराय नित्य देयं युधिष्ठिर ।

Colophon om in D1, 6. — *Parvan name* B1, 2 4 Dn2 D1 8 शाति — *Sub parvan* V1 B Dn D1-8 7 9 10 M1 2 4 दानधर्म — *Adhy name* B4 दान माहात्म्य; D5 ब्राह्मणप्रशसा, T2 आतिथ्ययज्ञनिर्णय, T3 G3 आतिथ्ययज्ञ — *Adhy. no* (figures, words or both) V1 60, D5 56, D10 64, T1 M 88, T2, 3 G2 4 95, G1 90, G3 89

## 60

1 D4 om. up to तथा (in 10[d]) (cf v l 13 59. 2) —[a]) V1 B3-5 Dn G1 यज्ञ, T1 यज्ञ (for यज्ञ) G1-3 [प]व (for [इ]ह) —[b]) D8 फलप्रद, D5-8 सुखावहं; D10 महत्फल (for महाफलम्) — T1 om 1[cd]. —[c]) D8 10 [अ]क्षयं (for ज्याय) T2 3 G किं स्यात् (for प्रोक्त) — V1 om 1[d]-3[c] —[d]) D1-3 कथंचन; D5 कथं तदा, T2 फल कदा, T3 कथ तथा (for कथं कदा) — After 1, T2 ins

334* नित्यानुष्ठानयुक्ताश्चेत्प्रतिगृह्णन्ति साधव ।

विद्वज्जिज्ञासमानाय दानधर्मान्प्रचक्ष्व मे ॥ २
अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः ।
किंस्विन्निःश्रेयसं तात तन्मे ब्रूहि पितामह ॥ ३
भीष्म उवाच ।
रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते ।
तस्य वैतानिकं कर्म दानं चैवेह पावनम् ॥ ४
न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः ॥ ५
अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः ।
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ॥ ६
ब्राह्मणांस्तर्पयेद्द्रव्यैस्ततो यज्ञे यतव्रतः ।
मैत्रान्साधून्वेदविदः शीलवृत्ततपोन्वितान् ॥ ७
यत्ते तेन करिष्यन्ति कृतं तेन भविष्यति ।
यज्ञान्साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ॥ ८
इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा ।
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ ९

C 13 3072
B 13 61 9
K 13 96 10
M 13 51 8

---

2 V1 D1 om 2 (cf v 1 1) T2 3 G om 2-3 — a) M [जिज्ञा]सोतु (for विज्ञातु) — b) D1 2 . 10 T1 यथा- (for चाथा)

3 D1 om 3, V1 om 3abc (for both, cf v 1 1) T2 3 G om 3 (cf v 1 2) — a) D10 अन्तर्वेद्याम् (for वेद्यां) D2 7 9 दान (for दत्त) — b) M1 श्रद्धा का (for श्रद्धया) B1 D10 वा (for च) B1 4 D1 2 6-9 [चा]नृशंसत D11 सवत् (for स्यत) D. श्रद्धया राजसत्तम — c) D - 2 किंचिद् (for किंस्विन्) B1 2 3 Dn D3 8 10 नैःश्रेयस

4 D1 om 4 (cf v 1 1) — a) D1 2 रौद्रे कर्म, D5 श्रौतं कर्म, T2 3 G1 M1 रौद्रकर्म, G1 रौद्रं धर्म (for रौद्रं कर्म) — b) M1 सतत (for स°) — c) D1 यस्य (for तस्य) Dn3 (marg as in text) स्मार्तं (for कर्म) T- 3 G M1 नास्य वैतानिकफल — d) D. च देह (for चैवेह) D3 यावन (for पावनम्) S विना दान सुरा( T1 M न पा )वन

5 D1 om 5 (cf. v 1 1) — a) T2 यज्ञो (for राज्ञा) — After 5a, S ins

335* याजका द्विजसत्तमा ।
धने सत्यप्रदातृणा

[ (L 1) T1 2 G2 याचका, T3 यज्वा (for या°) — G3 4 om line 2 — (L 2) T1 दिने (for धने) ]

— b) D1 9 गृह्णतु — c) T1 न चैते प्रतिगृह्णति, T- 3 G M प्रतिगृह्णति न तु चेद् — d) T G2 यज्ञोपान् (for यजेद्राजा) D1-9 तु, D10 T1 स (for [आ]प्त)

6 D1 om 6 (cf v 1 1) — a) T1 यदि (for अथ) V1 G1 ते (for चेत्) — b) D. T G--4 नृप

7 D1 om 7 (cf v 1 1) — a) V1 B2-. Dn तर्पयन् (for °येद्) D1 भूत्यैस्, D 7 यज्ञैस् (for द्रव्यैस्) — D3 om 7b — b) B3 - नात, Dn3 तते (for ततो) D10 यज्ञैर् (for यज्ञे) D1 2 तैस्तैर्यज्ञै-तुपद्रुत, D S स वै यज्ञोनुपद्रव, D3-9 तथा यज्ञैश्च पार्थिव — d) B1 शीलवर्ति, B1 °वृत्तांस्, D1 2 3 °वृत्ति (for वृत्त) Dn1 n2 तपोज्ञितान्, M2 (inf lin) समर्जितान् (for तपोन्वितान्) M1 2 4 शील व्रतसमन्वितान् — After 7, T1 reads 15ab, while the sequence in T- 3 G M after 7 is 8cd, 9ab, 8cd (r), 8ab and 9cd

8 For the sequence in T2 3 G M, cf v 1 7 D1 om 8 (cf v 1 1) T1 om. 8 — a) D1 यत्ते ते ह, D2 यत्वेते ह, D10 यत्रैनेन (for यत्ते तेन) T2 भविष्यति (for करि°) D -6 यस्तु नान्यस्करोतीह — b) M1 2 (inf lin) 3 मत (for कृत) T2 3 G1 3 4 तत्ते, M तव (for तेन) C2 करिष्यति (for भवि°) — c) T- G (all first time) सधाय (for साधय) — d) D2 स्वाद्वन्नान्, T- 3 G (all first time) मिष्टान्ना, M1 (first time) स्निग्धान्नान्, M2-4 (all first time) मिष्टान्नान् (for स्वाद्व ) T2 3 G M (all second time) स्वयं च यज पार्थिव

9 For the sequence in T- 3 G M, cf v 1 7 D1 om 9 (cf. v 1 1) — a) D. इष्टं दत्त, D6-9 T- 3 G2-4 M इष्टवत (M1 °तम्), T1 इष्ट हुत (for इष्ट दत्त) — c) S च या( T1 G1 2 4 M1 य )जीयास् (for यायजूकास्) D1 2 पूजयेद्यायजूकांश्च — T2 om 9d — d) D5 T1 3 G तथा, M तत (for यथा) — T1 3 G M2 ins after 9 T2 after 9ab M1 3 4 after the second occurrence of 10ab

336* विद्वद्भ्य सम्प्रदानेन तत्राप्यंशोऽस्य पूजया ।
यज्वभ्यश्चाथ विद्वद्भ्यो दत्त्वा लोकं प्रतापयेत् ।
प्रदद्याज्ज्ञानदातृणां ज्ञानदानांशभाग्भवेत् ।

[ (L 1) T2 G1 सत्र, T3 तदा (for तत्र) T1

प्रजावतो भरेथाश्च ब्राह्मणान्बहुभारिणः ।
प्रजावांस्तेन भवति यथा जनयिता तथा ॥ १०
यावतो वै साधुधर्मान्सन्तः संवर्तयन्त्युत ।
सर्वे ते चापि भर्तव्या नरा ये बहुभारिणः ॥ ११
समृद्धः संप्रयच्छस्व ब्राह्मणेभ्यो युधिष्ठिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ॥ १२
आज्यानि यजमानेभ्यस्तथान्नाद्यानि भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च ॥ १३
एते देया व्युष्टिमन्तो लघूपायाश्च भारत ।
अजुगुप्सांश्च विज्ञाय ब्राह्मणान्वृत्तिकर्शितान् ॥ १४
उपच्छन्नं प्रकाशं वा वृत्त्या तान्प्रतिपादय ।
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान्प्रति ॥ १५
एवं पापैर्विमुक्तस्त्वं पूतः स्वर्गमवाप्स्यसि ।
संसयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि ॥ १६
ततश्च ब्रह्मभूयस्त्वमवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत ॥ १७
पुत्रवच्चापि भृत्यान्स्वान्प्रजाश्च परिपालय ।
योगक्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत ॥ १८

---

[ऽ]स्ति पूजय, M1 4 damaged (for ऽस्य पूजया) — (L 2) T1 M1 3 4 यजद्भयश् (for यज्वभ्यश्) T1 तु पालय, M1 3 प्रपालयेत्, M4 प्रचाल° (for प्रदाय°) — (L 3) T1 M1 3 4 प्रन्दज् (for प्रदद्याज्) ]

10 D4 om 10 (of v l 1) M1 3, 4 read $10^{ab}$ twice — $^{a}$) Dn1 G1 3 प्रजावतो, D1 प्रज्ञावतो, M4 (second time) प्रजापतौ (for °वतो) D1 5 10 स्व (for च) D6–9 प्रजापाला (D6 corr °लो) भवेथाश्च — $^{b}$) V1 B Dn1 n2 D8 9 10 -कारिण, T1 हारिण, T2 3 G2 4 M1 3 (last two first time) -भाषिण (for भारिण) D6–8 ब्राह्मणान्ब्रह्मचारिण — After the second occurrence of $10^{ab}$, M1 3 4 ins 336* — $^{c}$) T2 3 G वयसि (for भवति) T1 प्रजाना तेन भवसि. — $^{d}$) D10 तव (for तथा)

11 T1 om 11 — $^{a}$) B1–3 याचत, D6–8 G M यावतो (for यावतो) V1 B Dn D10 साधुधर्मान्वै (by transp) — $^{b}$) V1 B Dn1 n2 D10 संवर्धयति, D4–9 सतर्प° (for सवर्त°) — $^{c}$) V1 B सर्वैस्ते, Dn1 n2 सर्वस्वैश्च; D5 (by corr) ते सर्वे (by transp) D6 (before corr) सर्वे चापि न भर्तव्या — $^{d}$) D6–9 निराशा (for नरा ये) V1 B Dn D10 कारिण, D5 भागिन, T2 3 G2 4 भाषिण (for भारिण)

12 $^{a}$) B1 3 स मृदु, D10 समृद्ध (for °द्ध) D10 M सन् (for स) B5 Dn1 n2 प्रयच्छ स्व — $^{c}$) D2 8 चापि (for ऽन्नानि) D1 धेनूरनुडुहश्चापि, D4 6–8 अनडुद्धेनुरत्नानि — $^{d}$) D1–9 छत्र (for च्छत्र) D1 2 [उ]पानह, G1–3 °नह (for °नहौ)

13 $^{a}$) Dn3 याज्यानि (for आ°) G1 3 याचमाने भ्यस् (for यज°) T1 देयानि यजमानेन — $^{b}$) V1 Dn3 [अ]न्यानि च, B Dn1 n2 [अ]न्नानि च (for [अ]न्नाद्यानि) T1 यानि च (for भारत). M साधना न्यपि भारत

14 $^{a}$) D1–4 6–9 दाया (for देया) D8 व्युष्टिमतो, D10 S पुष्टिमन्तयो (T3 °ती, M °स्विद्) (for व्युष्टिमन्तो) — $^{b}$) G1 3 लघूपायाश् — T1 om $14^{cd}$ — $^{c}$) T3 G M अजुगुप्सन्द्वि (G1 3 4 °प्सान्द्वि )जाश्चित्वं — $^{d}$) B1 विप्र- (for वृत्ति) Some MSS -कर्षितान्

15 T1 reads $15^{ab}$ after 7. — $^{a}$) D8 उपच्छन्नान् — $^{b}$) V1 B Dn पालयेत्, D1–3 पादयेत् (for पादय). — T1 om $15^{cd}$

16 $^{a}$) D7 वियुक्तस् (for र्विमु°) D5 तु (for स्वं) B Dn D10 T1 एव पापैर्विनिर्मुक्तस् — $^{b}$) B2 तत (for पूत) B1 4 5 Dn T1 स्व पू( T1 सुपू )त स्वर्गं माप्स्यसि, D10 पूत सन्स्वर्गमाप्स्यसि — B3 om (hapl) $16^{cd}$ — $^{c}$) V1 B1 2 4 5 Dn D4–9 M4 संचयित्वा; T1 वर्ज°, T2 कर्श° (for संस्र°) D1 कोशे, some MSS कोष (for कोश) — $^{d}$) D10 राज्यं (for राष्ट्रं)

17 $^{a}$) V1 B Dn D8 10 तेन त्व, T1 अतश्च (for ततश्च) D8 ब्रह्मभूतेस्त्व, D6 °यश्च; M4 °य त्वम् (for °यस्त्वम्) — $^{b}$) G4 नराधिप (for धनानि च). — $^{d}$) D6 7 वृत्तं (for वृत्तिं) S (except G2) रक्षस्व (for संरक्ष) — After 17, D4 6 ins 337*

18 D5 6 om (hapl) 18 D10 reads $18^{ab}$ twice. — $^{a}$) D7–9 भृतकान् (for भृत्यान्स्वान्) D10 (second time) पुत्रवद्भृत्यवच्चापि — $^{b}$) D1 पूज्याश् (for प्रजाश्) — $^{c}$) B Dn2 D8 10 T1 G1 2 योग (for योग-) — After 18, N (D4 6 after 17) ins

337* तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनम् ।
अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ।

अरक्षितारं हर्तारं विलोप्तारमनायकम् । तं स्म राजकलिं हन्युः प्रजाः संभूय निर्घृणम् ॥ १९

C 13 3096
B 13 61 32
K 13 55 34
M 13 51 19

श्रिया ह्यभीक्ष्णं संवासो दर्पयेत्सम्प्रमोहयेत् ।
ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद्ध्रुवम् ।
धर्मप्रणाशे भूतानामभावः स्यान्न संशयः । [5]
यो रक्षिभ्यः संप्रदाय राजा राष्ट्रं विलुम्पति ।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ।
यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणम् ।
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ।
अपीडिताः सुसंवृद्धा ये ददत्यनुकूलतः । [10]
तादृशेनाप्युपायेन यष्टव्यं नोद्यमाहृतैः ।
यदा परिनिषिच्येत निहितो वै यथाविधि ।
तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः ।
वृद्धबालधनं रक्ष्यमन्धस्य कृपणस्य च ।
न खातपूर्वं कुर्वीत न रुदन्तीधनं हरेत् । [15]
हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृपश्रियम् ।
दद्याच्च महतो भोगान्क्षुद्भयं प्रणुदेत्सताम् ।
येषां स्वादूनि भोज्यानि समवेक्ष्यन्ति बालकाः ।
नाश्नन्ति विधिवत्तानि किं नु पापतरं ततः ।
यदि ते तादृशो राष्ट्रे विद्वान्सीदेत्क्षुधा द्विजः ।[20]
भ्रूणहत्यां च गच्छेथाः कृत्वा पापमिवोत्तमम् ।
धिक्तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।
द्विजोऽन्यो वा मनुष्योऽपि शिबिराह वचो यथा ।
यस्य स्म विषये राज्ञः स्नातकः सीदति क्षुधा ।
अवृद्धिमेति तद्राष्ट्रं विन्दते सह राजकम् । [25]
क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः ।
क्रोशतां पतिपुत्राणां मृतोऽसौ न स जीवति ।

[(L 1) D4 जीविते, D5 7 जीवन (for जीवितं) D10 कृत्वान् (for पाल्यन्) D1-3 ना वैश्योदि- प्रमाथन, D1-5 मान्ये जीवि। हि ते (for the post half) —(L 2) D5 नदृय (for अनर्थो) D4 6 7 8 नद्दिते D6-9 निश्चयो (for -निचया) —(L 3) D4 9 ह्यभीक्ष्ण-, D6 [अ]नभीक्ष्ण (for ह्यभीक्ष्ण) Dn1 सवाने (for मवासो) D श्रियाभीक्ष्णं च संवासाद (for the prior half) V1 दर्पयेत्, D1-2 दर्पेन (for दर्पयेत्) D4 6-8 -प्रमोदयेत् (for प्रमोह°) —(L 4) B1 D8 प्रगृह्यु, Dn2 प्रमत्तेषु, D5 [अ]थ मूढेषु, D10 [अ]भिभूतेषु (for प्रमूढेषु) D1 धुर्यो (for धर्मो) D1-8 नश्यते (for विप्रणशेद्) D3 ध्रुव —(L 5) D4 6-9 नाश (for स्यान्न) D2 नाभाव स्यान्मन्दद (for the post half) —(L 6) D10 विलुम्पति (for °म्पति) —(L 7) B2 रक्षन्, B5 यदि, Dn1 n2 D4 7 8 यज्ञे, D4 रमेद् (for यक्ष्ये)

D5 राजा (for राष्ट्राद्) D1 2 ब्रुव (for ब्रुवन्) —(L 8) D1-2, 6-8 नत्त् (for दत्त्) D1-3 यत्र (for नदा) D1-7 10 यद्, D-7 8 नाद्न्, D3 महान् (for [आ]- ज्ञप्त) D1 8-10 भीरु-, D2 भीम- (for भीत) —(L 9) D5 वेद् (for यजेद्) B1 [अ]त्र (for [अ]स्य) —(L 10) D4 6 7 8 (before corr) आपीडिता D4 6-9 सुसंवृद्धा (for °वृद्धा) B. D5 यद् (for ये) —(L 11) Bom ed [अ]प्युपायेन (for [अ]प्यु°) Dn3 D3 9 10 नित्यमाहृतं (for नोद्य°) —(L 12) B5 निषेच्येत, D5 निर्दिशेत, D10 निषिच्येत (for निषिच्येत) D4 6 7 8 यदोषि निषेवत (for the prior half) V1 नियतो वै, B1-3 D. निचितार्थेद्, Dn3 निहते वै, D1-8 निहिता र्थेद्, D4 6 7 8 निहितार्थो, D3 निश्चितार्थो, D8 निश्चितार्थेद् (for निहितो वै) D1-7 9 यथोदधि (for यथा विधि) —(L 13) D1 यजेद्रा (for यजेत) V1 वर (for बहु) D2 दक्षिण —(L 14) B1 मनुष्य- (for अन्धस्य) —(L 15) B1 निधान-, D1 नव तु, D2 न नव (for न खात) D3 लोभ, D4 6-9 पूर, D10 भूत (for पूर्वं) B1 विन्देत (for कुर्वीत) D1 2 न तन्वी, D3 न नन्ते, D2 10 नद्दते (D10 °तो) न (for न रुदन्ती) —(L 16) V1 B1 2 5 Dn1 D1 10 हृत (for हृतं) D1-3 राष्ट्राद् (for राष्ट्रं) B4 नृपाश्रय, D1-8 नृपश्रिया, D5 7 नृप श्रिय (for नृपश्रियम्) —(L 17) D1-9 दायान् (for भोगान्) D1-3 भक्षयन् (for क्षुद्भय) —V1 B Dn8 D1-3 om line 19 —(L 19) D5 नत (for ततः) —(L 20) D4 ताहरो (for शो) V1 B5 D1-3 क्षुधाश्रित°, D1-9 क्षुधा- श्रित (for क्षुधा द्विज) —(L 21) B1 D1-9 भ्रूणहे वा- (D1 ना) वगच्छेथा, B1 D10 भ्रूणहेरवगच्छेथा (for the prior half) D1-9 अनुत्तम (for °वो°) —(L 22) B1 transp राज्ञो and राष्ट्रे D. transp राष्ट्रे and यस्य D2 राष्ट्र (for राष्ट्रे) —(L 23) D1-3 अवृत्त्यार्तो (for द्विजोऽन्यो वा) B1 मानुषो (for मनुष्यो) —(L 24) V1 om, B1 . स्व- (for स्म) —(L 25) D1-2 8 अवृत्तिम् B1 D1-4 8 9 एव (for एति) D2 राष्ट्रे (for राष्ट्र) B1 (also as above) अरक्षिता तद्राष्ट्र, D5 अविवृत्तिमेव तद्राष्ट्र (hypermetric) (for the prior half) D1-9 विन्दते नृपसत्तम (for the post half) —(L 26) D1-2 वा (for वै) D1-9 राष्ट्राद्धि (for वै राष्ट्राद्) D4 6-9 सहसा (for तरसा) —(L 27) D1 सर्व- (for पति) D5 मृत स, D3 स मृतो (for मृतोऽसौ) B5 Dn1 n2 D5 च (for न) ]

19 a) D2 partly damaged B1 3 4 D5 10 T2 8 G भर्तारं, D1 2 भोक्तारं, D1 कर्तारं (for ह°)

अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥ २०
पापं कुर्वन्ति यत्किंचित्प्रजा राज्ञा ह्यरक्षिताः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ २१
अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनम् ॥ २२
शुभं वा यत्प्रकुर्वन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥ २३
जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥ २४
कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयस्त्वानुजीवन्तु सुहृदश्च परंतप ॥ २५

इति श्रीमहाभारते अनुशासनपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## ६१

युधिष्ठिर उवाच ।
इदं देयमिदं देयमितीयं श्रुतिचोदना ।
बहुदेयाश्च राजानः किंस्विद्देयमनुत्तमम् ॥ १

भीष्म उवाच ।
अति दानानि सर्वाणि पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर्दोग्ध्री कामाननुत्तमान् ॥ २

---

— [b]) Dn1 n2 D8 अनायक (for अदा॰) — [c]) V1 B Dn तं वै, D5 न स, G1 3 तस्मै: G4 तस्स (for त स) T2 3 G M राजन् (for राज) T1 घर (for कलि) — [d]) V1 B2-5 Dn1 n2 सनह्य, B3 (marg) D10 संहत्य, Dn3 सदह्य (for सभूय) D4 6 7 9 निघृणा

20 D8 om 20[a] — [a]) D1 को, T3 G4 वै (for वो) — [c]) M4 सगत्य (for सहत्य) T1 वि, T2 [अ]व, T3 G [अ]पि (for ति) — [d]) Dn2 D4 6-9 आसुर (for आतुर) T1 चेतसोन्माद आतुर

21 [a]) D4 5 या (for यत्) — [b]) D8-9 राज्ञा (for राज्ञा) D1-8 10 तु, T1 [अ]पि, T2 3 G1-3 M om (for हि) — G1 3 om (hapl) 21[c]-23[b] — [c]) D8 9 भागस्य (for पापस्य) — B5 om (hapl) 21[d]-23[b] — [d]) T2 पाप च, T3 G4 भाग च (for भारत) V1 B1-4 Dn D10 राजा विंदति भारत, D1-9 राजा भागमुपाश्नुते

22 B5 G1 3 om 22 (of v l 21) — [a]) Dn3 D6 7 अथ, T1 अस्य (for अपि) — [b]) Dn3 चापरे (for निश्चय) — [d]) D4 6-9 मत (for मनो)

23 B5 G1 3 om 23[ab] (of v l 21) — [a]) V1 B4 Dn यत्र, B3 याश्च (for यत्प्र). — G2 om 23[c]-24[d] — [d]) D2 3 T3 प्राप्नोति, T3 G1 2 4 वा॰, M [ए]वा॰ (for चा॰) D6-9 प्रजा प्राप्नोति भारत

24 G2 om 24 (of v l 23) T1 om 24[ab] — [a]) D3 4 जीवित (for जीवन्त) D1 त्वामनु (hypermetric), T2 G4 चानु- (for त्वानु) D5 मत्वा जीवतमाजीव, D10 राजान चानुजीवति — D4 om (hapl) 24[b]-25[a] — [d]) S (G2 om) द्रुदम् (for द्रुमम्) V1 B1 प्रजा, Dn D5-9 [अ]ब्जा, M1 2 (inf lin) 3 4 द्विपा (for द्विजा)

25 D4 om 25[abc] (of v l 24) — [a]) T2 यक्षाणा (for रक्षांसि) — [b]) G4 [ई]श्वरा (for [अ]मरा) — [c]) T2 च (for त्वा)

Colophon om in D1 2 — *Parvan name* B1-4 Dn3 शांति — *Sub parvan* V1 B Dn D2, 4 6-10 M दानधर्म — *Adhy name* B1 भूमिदानप्रकटन, D6 राजधर्मानुकीर्तन, T2 धर्मशास्त्रनिर्णये दानयज्ञक्रियाफलकथनं — *Adhy no* (figures, words or both) V1 61, D10 65, T1 M 89, T2 3 G2 4 96, G1 91, G3 90.

## 61

1 [b]) B1 [इ]द, G4 सं (for [इ]य) V1 B1 2 5 Dn श्रुतिरादरात्; D4 6-9 ॰नोदना (for ॰चोदना). — [c]) B1 बहुदेवाश्च, B3 ॰देशाश्च (for ॰देयाश्च) — [d]) D6 किं तु, D7 किंचिद् (for किंस्विद्) V1 B Dn D10 दानम् (for देयम्)

2 [b]) D6-9 उत्तम (for उच्यते) — [c]) B4 तु, T

दोग्ध्री वासांसि रत्नानि पशून्व्रीहियवांस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥ ३
यावद्भूमेरायुरिह तावद्भूमिद एधते ।
न भूमिदानादस्तीह परं किंचिद्युधिष्ठिर ॥ ४
अप्यल्पं प्रददुः पूर्वं पृथिव्या इति नः श्रुतम् ।
भूमिमेते ददुः सर्वे ये भूमिं भुञ्जते जनाः ॥ ५
स्वकर्मैवोपजीवन्ति नरा इह परत्र च ।
भूमिर्भूतिर्महादेवी दातारं कुरुते प्रियम् ॥ ६
य एतां दक्षिणां दद्यादक्षयां पृथिवीपतिः ।
पुनर्नरत्वं संप्राप्य भवेत्स पृथिवीपतिः ॥ ७

यथा दानं तथा भोग इति धर्मेषु निश्चयः ।
संग्रामे वा तनुं जह्याद्दद्याद्वा पृथिवीमिमाम् ॥ ८
इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम् ।
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ॥ ९
अपि पापसमाचारं ब्रह्मघ्नमपि वानृतम् ।
सैव पापं पावयति सैव पापात्प्रमोचयेत् ॥ १०
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं जननी यथा ॥ ११
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दानं वाप्यथ वा ज्ञानं नाम्नोऽस्याः परमं प्रियम् ।

C. 13. 3114
B. 13. 62. 1
K. 13. 97. 1
M. 13. 52. 1

---

G₃ ₄ M च (for हि) — ᵈ) D₁ दोग्धि (for दोग्ध्री) V₁ B Dn इहो( B₁ Dn₁ °यो )त्तमान्, D₃ सदामुखान् (for अनुत्तमान्) D₂ दोग्धि कानानवस्थितान्

3 ᵃ) D₁₋₂ ₂ ₄ दोग्धि (for दोग्ध्री) — ᵇ) M₁ पशु D₁ ₂ व्रीहीन् (for व्रीहि) D₁₀ om. यवांस्तथा D₁₋₃ T₂ G₁ ₂ ₄ -यवं (for -यवान्) — ᵈ) T₁ मोदते (for एधते)

4 T₁ om. 4ᵃᵇ — ᵃ) D₁ ₂ इति (for इह) D₃ यावद्भूमिर्वायुरपि — ᶜ) T₂ ₂ G₂ ₄ इह तु (for स्तीह)

5 ᵃ) T₂ ह्यल्पम् (for अप्यल्पं) V₁ B Dn D₁₋₁₀ G₁ ₂ ₄ सर्वे, T₂ ₂ G₂ सर्वं (for पूर्वं) — ᵇ) T₂ G₁ इव (for इति) D₁₋₃ हि (for न) — ᶜ) V₁ B Dn D₁ ₋ ₁₀ पूर्व (for एते) D₁ ₄ ₆₋₉ पूर्वं, D₂ ₃ पूर्वे, M सर्वा (for सर्वे) — ᵈ) V₁ B Dn D₀ भूमिं ते (B₁ ये), T₂ यो भूमिं, G₃ ते भूमिद् (for ये भूमिं) B₁ G₂ नरा (for जना)

6 ᵃ) B₁ D₃ -कर्मणा, Dn₁ D₁ -मैत्र, S कर्म च (for -कर्मैव) D₁ ₆₋₉ स्व स्व कर्मोपजीविनि — After 6ᵃᵇ, M reads 8ᵃᵇ — ᶜ) D₁ भूमिं, D₋₆ भूमि (for भूमिर्) S पति ( T₂ G₂ °तिर् ) (for भूतिर्) — ᵈ) D₁₋₃ प्रीतिं (for प्रियम्)

7 ᵃ) D₁ ₂ य इमा, D₃ एता च (for य एता) — ᵇ) D₁₋ ₃ पृथिवीं (for अक्षया) V₁ B Dn D₃ ₁₀ राजसत्तम, S पृथिवीपते ( M °ते ) (for °पतिः) — D₄ ₆ ₇ ₈ om. (hapl.) 7ᶜᵈ — ᶜ) G₂ पुरः (for पुनर्) D₁ ₂ ₅ च ननन, D₂ संजनन, T₁ M राजत्वं, T₂ ₂ G राजानम् (for नरत्वं) — ᵈ) D₂ भवेच्च, D₅ स भवेत् (by transp.)

8 T₁ om. 8ᵃᵇ M reads 8ᵃᵇ after 6ᵃᵇ — ᵃ) T₂ ₂ G₃ ₄ दत्त (for दान) D₂ यथा (for तथा) D₃ भोग्य, D₁ ₂ भोगम्, D₆ भागम्, T₂ भोगा (for भोग) — ᶜ) T₁ तन् (for तनुं) — ᵈ) D₅₋₆ दद्यद् (for दद्याद्) V₁ B Dn D₁ ₁₀ M₂ च (for वा)

9 ᵃ) V₁ B Dn [पु]त्रद् D₂ T₂ G₁ ₂ ₄ M₁₋₃ [पु]त्रा (for [पु]त्रा) — ᵇ) V₁ B₁ ₋ Dn D₁₀ परमा प्रिय, B₂ D₂ T G M₁₋₂ परमाशिष (for °शिषम्) — ᶜ) B₁ पृथिवी दत्ता (by transp.) — ᵈ) D₁₋₀ T G M₃ शुश्रुन

10 ᵇ) V₁ B₁₋₃ ₋ Dn D₂ ₋ T₁ च (for वा) G₃ (inf. lin. as in text) इव पावक (for अपि वानृतम्) — T₁ om. 10ᶜᵈ — ᶜ) V₁ B Dn D₁ प्लावयति, D₁₀ च पचति (for पावयति) — ᵈ) B₁ D₁ प्रमुच्यते, D₁₋₂ ₆₋₈ प्रमुचति (for प्रमोचयेत्)

11 ᶜ) T₁ पृथिव्या (for °वीं) Dn₃ D₁ ₆ ₇ T₂ G₁ [स]न्यम् (for [न्य]द्) — ᵈ) B₃ ₄ T₁ पावनी (for °न) S (except M₂ ₄) जगती (for जननी) Dn₁ तथा, D₁₀ T₁ ₂ G M वत (for यथा) D₁₋₃ पावनं क्षेत्रमुत्तमम् — After 11, D₄ ins. 338*

12 D₁ om. 12ᵃᵇ⁻ᵈ — ᵃ) D₁₀ T ₂ G₁ पृथु- (for प्रिय) — T₁ om. 12ᶜᵈ — ᶜ) D₅₋₆ दत्त (for दान) D₋ च (for वा) V₁ B Dn D₁ ₆₋₉ G₁ ₃ M₁ [ज्ञा]दान (for ज्ञान) — ᵈ) D₇ ₋₀ M नाम (for नाम्नो) G₄ परम- (for °मं) V₁ B Dn नामास्या प्रथमं प्रि

तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः ॥ १२
नाभूमिपतिना भूमिरधिष्ठेया कथंचन ।
न वा पात्रेण वा गूहेदन्तर्धानेन वा चरेत् ।
ये चान्ये भूमिमिच्छेयुः कुर्युरेवमसंशयम् ॥ १३
यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः ।
भूमिं तु दत्त्वा साधुभ्यो विन्दते भूमिमेव हि ।
प्रेत्येह च स धर्मात्मा संप्राप्नोति महद्यशः ॥ १४
यस्य विप्रानुशासन्ति साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन्प्रशासन्ति वसुंधराम् ॥ १५
यत्किंचित्पुरुषः पापं कुरुते वृत्तिकर्शितः ।
अपि गोचर्ममात्रेण भूमिदानेन पूयते ॥ १६
येऽपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥ १७
अल्पान्तरमिदं शश्वत्पुराणा मेनिरे जनाः ।

---

( B4 °म श्रि , Dn1 n2 °मप्रि )य — After 12^cd, N ( D4 after 11 ) ins

338* य एता विदुषे दद्यात्पृथिवीं पृथिवीपतिः ।
पृथिव्यामेतदिष्ट स राज्याद्राज्यमितो व्रजेत् ।
पुनश्च जनन प्राप्य राजैव स्यान्न सशय ।

[ ( L 1 ) D3 एना य ( by transp ) D1 8-9 पुरुषा ( for विदुषे ) D2 om (hapl) पृथिवीं D1-3 पते ( for -पति ) — ( L 2 ) D1 8-9 इष्ट हि, D10 आदिष्ट ( for इष्ट स ) B2 Dn1 n2 D5 राजा ( for राज्याद् ) D1 [ऽ]भवीत्, D6 भवेद् ( for व्रजेत् ) — ( L 3 ) V1 B Dn2 n8 [अ]नी जानैं, D4 6-8 जन्न स ( for जनन ) V1 B Dn1, n2 राजवत् ( for राजैव ) ]

— After the above, V1 reads 14^ab, repeating it in its proper place V1 om 12^cd D9 om (hapl) 12^e-13^f — ^e) T3 अस्मात् ( for त° ). — ^f) B3 5 D3, 5 10 G2 4 पार्थिव ( for °व )

13 D9 om 13 (cf. v l 12) — ^a) D3 5 S भूमि (for [अ]भूमि). V1 भूमिं तु दत्त्वा नाभूमिर् (sic) — ^b) D1 6 7 अधिष्ठेन (for °ष्ठेया) — T1 om 13^cd — ^c) V1 B3 5 Dn8 D10 च (for the first वा) B1 आज्ञा (for गूहेद्) B3 4 न चापात्रे न च गूहे, Dn1 न वापात्रे न वा आज्ञाद्; D4 6-8 नावागमा गेणावगूहेद्, D5 corrupt, S (T1 om) न च वस्त्रेण वा गहेद् — ^d) T3 G1 4 नातर्धानेन (for अन्त°) V1 B2 D5 Cnp चाचरेत् ( for वा च° ) B1 दातव्यानेन वा भवेत्, Dn1 n2 दत्तदानेन चाचरेत्, T2 G3 नातर्धानेन वाचयेत् ॐ Cn भूमिदान दानान्तरवत गूहनीय किं तु प्रख्यापयेदेव । ॐ — ^e) D1 [अ]पि (for [अ]न्ये) D5 7 ये चापि ता ( चेच्छेयु — ^f) D10 एतत्, T2 8 G1 एव (for एवम्) V1 B Dn D10 T न सशय (for असशयम्)

14 V1 reads 14^ab for the first time after 338*

— ^a) T3 न (for य) B1 साधु (for साधोर्) D5 om (hapl) from भूमि up to साधो (in 15^b) G3 आधत्ते (for आदत्ते) — ^b) T1 पुन, T2 3 G2 4 नृप, G1 8 M नृप (for तु स) — ^c) Dn1 n2 D1-4 6-10 M2 दत्त्वा तु (by transp) — ^d) V1 B Dn D10 उत्तमा, T2 3 G M एव च (G3 वा, M ह) (for एव हि) — D4 om (hapl) 14^e-15^b — ^e) V1 B Dn D10 M1-3 चेह च, T1 G1 3 M4 चेह स, T3 G4 [इ]व च स (for [इ]ह च स) — After 14, D10 S ins

339* एकाहारकरीं दत्त्वा षष्टिसाहस्रमूर्ध्वग ।
तावत्याहरणे हृत्वा नरकं द्विगुणोत्तरम् ।

[ ( L 1 ) D10 G3 एकाकार- ( for °हार- ) D10 -सहस्रम् — ( L 2 ) D10 T2 G2 4 पृथ्व्या, M1-3 हृद्र् (for हृत्वा). T1 तापश्चादरणे पृथ्व्या (for the prior half) T1 द्विगुणायित ( for °णोत्तरम् ) ]

15 D5 om up to साधो (in 15^b), D4 om 15^ab (for both, cf. v l 14) — ^a) B1 तु शासंति; B3 4 D1-3 प्रश°, B5 Dn D10 तु श°, T1 न शा° (for [अ]नुशा°) — ^b) D1 स च (for सदा). B4 M ह (for हि) — ^c) D2 तस्य न (by transp), D5 न तत्र — ^d) V1 B3 4 5 Dn8 प्रशासति, B8 Dn1 n2 D3-5 G4 M8 प्रशसति (for प्रशा°)

16 ^a) B2 partly damaged D1-3 5 8 9 G1 8 कुरुते (for पुरुष) — ^b) D1-3 8 9 G1 8 पुरुषो (for कुरुते) Some MSS. कथित — ^c) M गोकर्ण (for गोचर्म) — ^d) Dn1 भूमिं दानेन पूजयेत्; T1 नर पापात्प्रमुच्यते — After 16, D10 ins

340* दशहस्तेन दण्डेन त्रिंशद्दण्डान्समन्ततः ।
पञ्चहस्ताधिकं दद्यादेतद्गोचर्म उच्यते ।

17 ^a) B1 तु (for ऽपि) — ^b) D8 om राजानो Dn1 D2 G1-8 कर्मण — ^c) D9 om माख्येयं T1 पवित्रता याति तेपि

यो यजेदश्वमेधेन दद्याद्वा साधवे महीम् ॥ १८
अपि चेत्सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः ।
अशक्यमेकमेवैतद्भूमिदानमनुत्तमम् ॥ १९
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञ ददाति वसुधां ददत् ॥ २०
तपो यज्ञः श्रुतं शीलमलोभः सत्यसंधता ।
गुरुदैवतपूजा च नातिवर्तन्ति भूमिदम् ॥ २१
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदम् ॥ २२
यथा जनित्री क्षीरेण स्वपुत्रं भरते सदा ।
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ॥ २३
मृत्योर्वै किंकरो दण्डस्तापो वह्नेः सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥ २४
पितॄंश्च पितृलोकस्थान्देवलोके च देवताः ।
संतर्पयति शान्तात्मा यो ददाति वसुंधराम् ॥ २५
कृशाय म्रियमाणाय वृत्तिम्लानाय सीदते ।
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥ २६
यथा धावति गौर्वत्सं क्षीरमभ्युत्सृजन्त्युत ।
एवमेव महाभाग भूमिर्भवति भूमिदम् ॥ २७
हलकृष्टां महीं दत्त्वा सबीजां सफलामपि ।

C 13 3133
B 13 62. 31
K. 13 97 37
M 13 52. 27

18 V1 T2 om (hapl) 18-19 T1 om 18ab —a) D1-3 स्वल्पातरम्, D7 8 9 अल्पतरम् (for अल्पान्तरम्) D. शाश्व (for शश्वत्) —b) B3 पुनाना, D3 4-9 G2 पुराण (D4 G2 °णे) —c) M यद् (for यो) B Dn1 n2 M2 यजेत (for यजेद्) T1 ययजेयाश्वमेधेन

19 V1 T2 om 19 (cf. v l 18) —a) T2 G1 2 4 M क्षय (for अपि) D1-9 दुष्कृत (for सुकृतं) D1-3 दत्त्वा (for कृत्वा) T1 तुल्य वाप्यधिक वेति —b) D2 येन (for अपि) D1 6 7 8 शक्रेरन्नेव पात्र कात्, T3 G2 शकने चापि पद्वित —T1 om 19cd —c) B3 D2 2 10 T2 G2 4 M4 एवम् (for एकम्) —d) D भूहि (for भूमि)

20 a) D6 8 9 सुवर्ण (for सुवर्णं) T2 राजत (for रजत) —b) G1 partly damaged D6 मणिमुक्ता, G2 मुक्तामणि (for मणिमुक्ता) D3 मणिमाणिक्यमेव च —c) V1 B3 4 . Dn प्राज्ञो, D1 प्रज्ञ (for प्राज्ञ) —d) D1 6 8 9 G1 ददन् (for ददत्)

21 a) B1 D10 T2 3 G M1-2 यज्ञा D4 यो यज्ञशील सततम्, D5 7 योगो यज्ञश्च सततम्, D3 यो यज्ञ सततं लोके —b) T2 3 G अद्रोह (for अलोभ) —c) D10 T2 3 G पूजाद्य (for -पूजा) —d) V1 B1 . Dn1 n2 D1 3 एता (for नाति) D 7 T2 3 G2 4 -श्रामति (for -वर्तन्ति) D2 भूमिप (for °दम्)

22 D5 om (hapl) 22 —a) Dn1 n2 भर्तृ, D1 om (for भर्तुर्) —c) B1 -लोक, D1-3 लोके D3 4 6-10 मतो (for सिद्धा)

23 D5 8 om (hapl) 23-24 —a) V1 B (B2 damaged) Dn स्व पुत्र (for क्षीरेण) —b) V1 B Dn क्षीरेण, D1 2 6 7 10 स्व (D5 त) पुत्रं (for स्वपुत्र) — G1 8 om 23c-28b —d) Dn1 यथा, T2 तदा (for तथा) T2 गुणैर् (for रसैर्)

24 D5 6 G1 3 om 24 (cf v l. 23) —a) V1 B2 4 5 Dn T1 M4 मृत्युर् (for मृत्योर्) D. मृत्यै-वैवस्वतो ददम्, T2 3 G2 4 मृत्योर्वै किंकरा ददाम् (T2 द, G1 °दयात्) —b) V1 B Dn M4 तमो वह्नि, D5 7 T2 3 G2 M1-3 तपो वह्ने (for तापो वह्ने) D3 T3 G2 सुदारुणे (T2 °णा) —c) D4-7 वै, D10 वा (for च) V1 B Dn T2 G2 दारुणा (for वा°)

25 G1 3 om 25 (cf. v l 23) T2 3 G2 4 om (hapl) 25-27 —b) V1 B. Dn लोकाश्च, D4 8-9 -लोकेषु, T1 लोकस्थ (for -लोके च) —c) D3-5 M1 3 स तर्पयति, D3 9 मदर्पयति (for संतर्प°)

26 G1 3 om 26 (cf v l 23) T2 3 G2 4 om 26 (cf v l 25) —a) T1 M कृशाय ह्रीमते तात —b) D10 वित्तहीनाय सीदते —d) B3 सश्रीर्, T1 देवो (for सत्री)

27 G1 3 om 27 (cf v l. 23) T2 3 G2 4 om 27 (cf v l 25) T1 om 27 —a) B. Dn3 भवति, M भरति (for धावति) —b) V1 B Dn स्रव( B1 2 स्रन )ती वत्सला पय, D1-9 स्नेहाद्विसृजती पय, D10 क्षरती सतत पय, M क्षीरवत्युत्सृजत्पय —c) D1 2 महाराज, D3 °भाद्रो (for भाग) —d) B1 3 4 D1 2 4-10 भजति, Dn3 damaged, M भरति (for भवति)

28 G1 3 om 28ab (cf v l 23) —a) V1

उदीर्णं वापि शरणं तथा भवति कामदः ॥ २८
ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम् ।
नरः प्रतिग्राह्य महीं न याति यममादनम् ॥ २९
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ॥ ३०
अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः ।
याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ॥ ३१
मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ ।
अस्मिँल्लोके परे चैव ततश्चाजनने पुनः ॥ ३२
य इमां व्याहृतिं वेद ब्राह्मणो ब्रह्मसंश्रितः ।
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ॥ ३३
कृत्यानामभिशस्तानां दुरिष्टशमनं महत् ।
प्रायश्चित्तमहं कृत्वा पुनात्युभयतो दश ॥ ३४
पुनाति य इदं वेद वेद चाहं तथैव च ।
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ॥ ३५
अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नादद्यात्साधुतश्च ताम् ॥ ३६
सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयम् ।

---

B3 ∪ Dn D∪ 7–10 फाल , D4 6 फले ( for हल ) —[b] ) D9 इति ( for अपि ) —[c] ) T G सोदक ( for उदीर्णं ) B1 3 4 D10 च ( for वा ) D1–3 उद्यानं शयन वापि, D4–7 9 सोद्यानशरणा वापि ( D5 °र्णा ), D8 उदीर्णं शरण वापि, M सोदका ( M1 °क ) वा सशरणा ( M4 °ण ) —[d] ) Dn D8 यथा ( for तथा ) D1–3 M1–3 कामभुक् ( for कामद )

29 T1 om 29 —[a] ) V1 B1–4 Dn D2 3 वृत्ति- ( for वृत्त ) —[b] ) D1–9 यतव्रत ( for शुचि° ) —[d] ) G1 मदिर ( for मादनम् ) V1 B Dn न याति परमा पद, D10 प्रयाति परम पद

30 [a] ) M1 वृत्तिर् ( for वृद्धिर् ) — G1 om ( hapl ) 30[cd] —[c] ) V1 D5 यथा ( for तथा ) —[d] ) B1 अशेषस्य ( for सस्ये सस्ये ) D1–3 M [s]भिवर्धते, D10 विवर्धयेत्, G1 3 [s]पि वर्धते ( for विव° )

31 [a] ) V1 तत्र ( for अत्र ) B3 D1–6 अ ( D1 2 य ) त्र गाथां भूमिकृता ( B3 °गीता ) —[c] ) D1–7 9 या; G3 यथ् ( for या ) —[d] ) B3 Dn1 n3 D1–3 4–7 9 कश्यपाय ( for का )

32 [a] ) D3 M3 3 मादत्त ( for मां दत्त ) D1–3 मा मा मा दत्त मा दत्त, D10 T1 2 G1 2 4 M1 4 मामेव दत्त ( D10 त्ता ) मादत्त, T2 मामेव दत्तामादाय —[b] ) D1 T1 M मा ( for मा ) D5 G1 अवाप्स्यते —[d] ) V1 B Dn1 [आ]जायते, D1 2 [आ]जरसे, D3 [आ] वासते, D5 T2 G जनने ( for [आ]जनने ) Dn1 n3 D3 10 T2 तदत्त ( D3 10 °पश्यो ) जायते पुन

33 [a] ) Dn3 यद्गूना ( for य इमां ) T2 व्याहृतीर्, G3 व्याहतीं — B G2 om ( hapl ) 33[b]–35[a] —[b] ) D5–8 मन्त्रिता, G1 मश्रुत, M1 3 संश्रित ( for संश्रित ) V1 B1–4 Dn D10 ब्राह्मणो वेदसमिता, D4 °णो ब्राह्मसंश्रिता —[c] ) V1 B1–4 Dn D10 M3 4 श्राद्धस्य क्रियमाणस्य —[d] ) D5 ब्राह्मभूमिं, D10 ब्रह्मरूप ( for °भूय ) G1 गमिष्यति ( for स गच्छति )

34 B5 G2 om 34 ( cf v l 33 ) —[a] ) D8 om. from मभिशस्ता up to पुना ( in 35[a] ) V1 B2 4 Dn1 D8 अधि ( for अभि- ) B ( G2 om ) -शस्तानां ( for -शस्ताना ) ❀ Cn कृत्यानां मन्त्रमयीना मारणार्थशक्तीनाम् ❀ —[b] ) V1 B Dn D8 10 अरिष्ट ( for दु ) — T1 om 34[cd] —[c] ) B3 D10 इदं कृत्वा, Dn1 n3 D1–5 7–9 G1 महीं दत्त्वा ( D8 कृत्वा ), T2 G3, 4 महीं दत्ता; T3 M1 अहं दत्ता, M3–4 अह दत्त्वा ( for अह कृत्वा ) —[d] ) D2 M1 2 पुनामि ( for °ति )

35 B5 G2 om 35[a] ( cf v l 33 ) D8 om पुना ( in 35[a] ) ( cf v l 34 ) —[a] ) M पुनामि ( for °ति ) M4 च ( for य ) D3 4 T1 G1 3 M1–3 इम ( for इद ) —[b] ) D5 वाक्य ( for वेद ) V1 B2–5 Dn1 n3 D4 6–10 T2 3 G1 वाद, Dn3 वादस्, D1 G1–3 वाहं, D5 वेद ( for चाह ) B3 T2 3 G M1–3 त, D1 2 हि ( for च ) T1 भूमिचारित्रदर्शन —[d] ) V1 B Dn D10 वैश्वानरी ( for वै शाश्वती ) D4 6–9 समा ( for मता ).

36 [a] ) D3 G3 [इ]व ( for [ए]व ) —[b] ) Dn D1 3 3 G1 3 इदम्, D अमुम् ( for इमम् ) G2 आगत ( for °मम् ) D1 6 7 9 श्रावयेदनुपागम —[c] ) D1 5 दत्त्वा ( for दद्यान् ) —[d] ) D6 om. ( hapl ) मादद्या D3 10 स दद्यान् ( for नाद° ) D6 दद्याद्धश्चरितैर्धरा, G2 corrupt

37 D∪ om ( hapl ) 37[a]–39[b] D10 reads 37[ab] twice —[a] ) D10 ( second time ) ब्राह्मणार्थे ( for °र्थो )

राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥ ३७
अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ॥ ३८
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ॥ ३९
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥ ४०
तस्य राज्ञः शुभैरार्यैः कर्मभिर्निर्वृताः प्रजाः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ ४१
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ।
स दाता स च विक्रान्तो यो ददाति वसुंधराम् ॥ ४२
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ।
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ॥ ४३
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ॥ ४४
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम् ॥ ४५
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च ।
चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ॥ ४६
एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किंचिदस्ति जनाधिप ॥ ४७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

C. 13 3153
B. 13 62. 51
K. 13 97 52
M 13 52 46

D10 (first time) S सह (T1 सोह, M1-3 सा हि, M4 सहो) कृत्स्ना (G2 त्वा) ब्राह्मणार्या (G4 -र्यं) — b) D10 (first time) S राजानश्च (for धर्म°) V1 B1 3-5 Dn D5 10 (first time) T G1 3 4 [ज्ञ]मवाय — T1 om. 37cd — c) M2 [ज्ञ]पि (for हि) T2.3 G कुशलं — d) D1 6-9 T2 G4 भूमि, T3 G1 3 भूरि (for भूति) B4 -लक्षण

38 D7 om 38 (cf v 1 37) — c) V1 B Dn प्रबुध्यंति — D2 T2 3 G om (hapl) 38d–40a — d) V1 B1 2 3 Dn1 n2 n3 (also as in text) प्रासुवंति (for प्रस्वपन्ति)

39 D3 om 39ab (cf v 1 37) D2 T2 3 G om 39 (cf v 1 38) D2 om (hapl) 39-40 — a) T1 M1 तथा (for सदा) — b) D4 6 7 8 सहा, T1 द्विजा (for नरा) — D5 om 39c–40b T1 om 39cd — d) D10 राज्य (for राष्ट्र) D1 7 मन्याविशति, M मस्याविं° (for नास्यावि) B4 च (for तत्) D1 2 सत्वा राष्ट्रं विशति त, D4 महाराष्ट्रं विशति तत्

40 D2 T2 3 G om 40abc (cf v 1 38) D2 om 40, D5 om. 40ab (for both, cf v 1 39) — a) D1 6 7 शक्तो (for प्राज्ञो) — T1 om 40cd — c) D1 6 7 8 सुसुखं (for सुख ते) B1 सुसुख प्रतिबुध्यति

41 a) Dn1 यस्य (for तस्य) B2 4 Dn1 n2 राज्यं, B5 राष्ट्रं, D1-6 सर्वं, T2 3 G कार्यं (for आर्यं) — b) V1 B5 Dn नरा (for प्रजा) — T1 om 41cd — c) B2 Dn2 D4-5 वृत्त्या, B1 घृष्ट्या, D10 G1-3 दिष्ट्या (for वृष्ट्या) D2 4-5 [ज्ञ]पि, D3 हि, G2 [ह्]व (for च) — d) D5 वर्धतेपि (for विवर्धन्ते)

42 b) G2 om (hapl) स बन्धु D1 ह्, D7 7 8 हि (for च) D2 कर्मकृत् (for पुण्य°) — G1 3 om 42c–43b — c) S (G1 3 om) राजा (for दाता)

43 G1 3 om 43ab (cf v 1 42) T1 om. 43ab — a) S (T1 G1 3 om) आदित्य इव दीप्येत — b) G2 M मानव- (for °वा) T2 3 G4 तेजसा स्विह मानव — c) B1 D1 10 ददते, B4 S ददाति, D2 ददते, D3 8 ददति (for ददन्ति) D4-5 ध्रुवनि (D5 नीं) (for वसुधा) — d) S (except G1 M1 2) यो (for ये) B2 4 D2-4 T3 विदुषे (for षि)

44 a) B2 partly damaged V1 B2 5 Dn सस्यानि (for बीजानि) — d) V1 B4 Dn2 D2 6 7 समर्जिता

45 a) Dn1 वसवो (for वरुणो) — d) G1.3 अभि (for प्रति) T2 G2 M1 2 नदति D7 7 G4 M1 3 भूमिप (for °दम्)

46 a) D8 जायते पुरुषा भूमौ — b) T1 3 G [ज्ञ]पि, T2 [ठ]त (for च) — c) M यो लोक (for लोकोऽय) — d) B1 D1 2 S (except G2) सोय (for योऽय) D8 भूमिं मुने गुणात्मक

47 b) D5 स नगत (for जगत) D2 स्मृता, T1 तले (for पते) — d) B2 G4 नराधिप (for जना°) — After 47, D10 T2 3 G4 ins

341* सौवर्णा यत्र प्रासादा वसोर्धाराश्च कामदा ।
गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदा. ।

बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ ४८
इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ॥ ४९
भगवन्केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयं महार्घं च तद्ब्रूहि वदतां वर ॥ ५०
इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्महातेजाः प्रत्युवाच शतक्रतुम् ॥ ५१
सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
दददेतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ ५२
न भूमिदानाद्देवेन्द्र परं किंचिदिति प्रभो ।
विशिष्टमिति मन्यामि यथा प्राहुर्मनीषिणः ॥ ५३
ये शूरा निहता युद्धे स्वर्याता दानगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ ५४
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः शूरा नातिक्रामन्ति भूमिदम् ॥ ५५
पञ्च पूर्वादिपुरुषाः षट् च ये वसुधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ ५६
रत्नोपकीर्णां वसुधां यो ददाति पुरंदर ।

---

48 $^{d}$) T1 जनाधिप ( for युधिष्ठिर )

49 $^{a}$) T1 G1 3 [अ]पि ( for [अ]थ ) — $^{c}$) D3 4 6–10 G2 3 M1–3 मघवान्, T2 3 G4 भगवान् ( for मघवा ) D1–9 वाग्मिना ( for वाग्विदां ) Dn1 G2 श्रेष्ठ — $^{d}$) T1 पप्रच्छ च, G1 3 पर्यपृच्छद् ( for पप्रच्छेद )

50 Before 50, some MSS ins इन्द्र and some मघवा — $^{a}$) T2 G4 येन ( for केन ) — $^{b}$) T G स्वर्गे वै ( for स्वर्गत ) — $^{c}$) V1 B1–3 5 D1 अक्षय्य D3 6–9 महद्यच्च ( for महार्घं च ) D5 10 T1 2 G M यदक्षर( G2 °य्य )महार्यं ( D10 °र्थं ) च, — $^{d}$) B1 तद्ब्रह्म, G2 किं ब्रूहि ( for तद्ब्रूहि ) — After 50, D10 ins an addl colophon [ *Sub parvan* दानधर्म —*Adhy name* बृहस्पतींद्रसंवाद —*Adhy no* 66 ]

51 Before 51, some MSS ins भीष्म — $^{a}$) D2 तु ( for स ) — $^{c}$) V2 B Dn D1–8 10 बृहत्तेजा — $^{d}$) D4–9 पुरंदर ( for शतक्रतुम् )

52 Before 52, some MSS ins बृहस्पति — $^{b}$) B2 ( marg as in text ) पृथिवीदानमेव च — After 52$^{ab}$, D12 S ( except T1 ) ins

312* विद्यादानं च कन्याना दान पापहर परम् ।

— M om 52$^{cd}$ — $^{c}$) V1 B3 Dn1 ददश्चैतान्, B4 Dn2 n3 °ते तान, D1 3 T2 G1 3 °ते तं, D3 4 T1 3 G2 4 °ते सन्, D5 ददात्येतन्, D7 9 ददद्देतन्, D10 °स्वेतन् ( sic ) ( for °देतान ) B1 D2 3 7 10 T G1–3 महाप्राज्ञ, D1 °प्रज्ञ ( for °प्राज्ञ ) B2 एतत्प्रयच्छमानो हि

53 $^{a}$) D6–9 राजेंद्र ( for देवेन्द्र ) — $^{b}$) T1 इह ( for इति ) — $^{c}$) D4 8 9 इह ( for इति ) D4–10 पश्यामि, S मन्येह ( for मन्यामि ) — D10 T G ins after 53

M after 55

343* ब्राह्मणार्थे गवार्थे वा राष्ट्रघातेऽथ स्वामिन ।
कुलस्त्रीणा परिभवे मृतास्ते भूमिदैः सह ।

[ ( L 1 ) M च ( for वा ) T1 M च ( for ऽथ ), D10 वा पुन , T3 वात्मन , G4 वाग्मिन ( for स्वामिन ) T2 राष्ट्रधाने दवाग्निना ( for the post half ) — ( L 2 ) T3 damaged M हता नो ( for मृतास्ते ) D10 T2 G2 M1 3 समा ( for सह ) ]

54 T3 partly damaged — $^{a}$) B1 पुरा ( for शूरा ) S ( T3 damaged ) शयिता ( for निहता ) — $^{b}$) B1–4 Dn D10 रण , M दार ( for दान ) T2 3 गृह्णत ( for गृद्धिन ) V1 B5 स्वर्याता रणमूर्धनि ( B5 °न ) — $^{d}$) D1 [अ]भ्यक्रामति, D5 6 [अ]त्याक्रा°, D8 9 [अ]भ्युत्क्रा°

55 D6 om (hapl.) 55 — $^{a}$) Dn1 D3 7 8 निःश्रेयसा, D2 सैद् ( for °से ) — $^{b}$) G1 सत्यात्मानो ( for त्यक्ता° ) — $^{c}$) D8 लोके; D10 T2 3 G1 3 4 लोक ( for लोक ) Dn1 n2 D1 3 5 युक्ता; D7 मुक्ता ( for शूरा ) — $^{d}$) D8 [अ]त्याक्रामंति; D4 [अ]त्युत्क्रा°, D9 [अ]भ्युत्क्रा° ( for [अ]तिक्रा° ) — After 55, M ins 343*.

56 $^{a}$) V1 B Dn2 n3 D2 9 G2 पूर्वा हि, D1–3 पूर्वं च, D10 पूर्वं हि; T1 पूर्वाश्च ( for पूर्वादि ) — $^{b}$) V1 B1 3 वान्ये, B2 4 Dn3 चान्ये, B5 वास्य, Dn1, n2 अन्ये, D8 9 एव ( for च ये ) T2 3 G4 M च स्वधा ( T2 °धा ), G1 3 च दिव ( for वसुधां ) D6 पदेव वसुधागता , D7 पदेव वसुधाधिपा , T1 पच ये चोत्तर गता — $^{c}$) V1 G1 3 भूमि ( for भूमिं ) — $^{d}$) D5 भूमिद ; D9 G1 3 मानव ( for °व ) T1 प्रतिपालयते नर

स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥ ५७
महीं स्फीतां ददद्राजा सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ ५८
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥ ५९
सर्वकामदुघां धेनुं सर्वकामपुरोगमाम् ।
ददाति यः सहस्राक्ष स स्वर्गं याति मानवः ॥ ६०
मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ६१
भूमिप्रदानान्नृपतिर्मुच्यते राजकिल्बिषात् ।
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ६२
ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥ ६३
पुण्यामृद्धरसां भूमिं यो ददाति पुरंदर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणार्जिताः ॥ ६४
सर्वथा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सता ॥ ६५
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥ ६६
सागरान्सरितः शैलान्काननानि च सर्वशः ।
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ ६७
तडागान्युदपानानि स्रोतांसि च सरांसि च ।

C 13 3173
B 13 62 71
K 13 97 73
M 13 52 66

57 T3 partly damaged — a) D1 रत्नप्र, T1 रत्नाव (for रत्नोप) — b) M1-4 [s]द्रान्भूमिं (for ददाति) D4 वसुधरा (for पुरंदर) — c) D10 मुक्तै (for मुक्त) — d) D2 om स्वर्गलोके V1 D4 5 सर्वं, D1 स्वर्गं (for स्वर्ग)

58 a) D1-9 ददत्, V1 B Dn D10 T1 रानन (for राजा) — b) D1-6 समन्विता (for गुणा) — d) B1 तद्विद्धि दानमुत्तम

59 d) T1 ना (for मां) T1 ददाद् (for ददाति) B3 च, D2 5 [इ]व, D4 6-9 [इ]इ (for [इ]ति)

60 D4 om (hapl ?) 60 — a) B1 D10 दुहा (for दुघा) — b) V1 B Dn D10 गुणान्विता, D1 T3 -पुरोगम (for °गमाम्) — d) V1 B Dn D10 स्वर्गं याति स मानव

61 a) D1-9 प्रवाहिन्य, some MSS प्रवाहिण्य (for °हिन्य) — d) D1 2 सुरेंद्र वसुधा ददत

62 Dn1 om 62ab — b) V1 B Dn2 n3 D4 10 सर्वं, D2 6-7 T1 3 राज्य (for रात्र) — c) B1 तद् (for हि) B2 D प्रदानाद्धि (for °नेन) — d) D2 प्रशस्यते (for विशिष्यते)

63 b) D2 T3 G1 शास्त्र, D5 G3 शक्र (for शस्त्र) D3 पृथ्वीं शस्त्रविनिर्जिता — c) D9 G2 सज्जना (for तं जना) Dn3 कथयति स्म, D1-3 8 9 T1 कथयिष्यति (for °यन्तीह) — d) V1 B Dn भवति, T1 तिष्ठति (for धरति) D1-9 यावद्भूमिर्धरिष्यति

64 a) D10 तुल्याम् (for पुण्याम्) V1 B Dn1 n2 ऋद्धिरसा, Dn3 D1-9 मृद्धु°, T2 3 G रसभृता (for ऋद्धरसा) — T2 3 G3 4 om 64c-65d — c) D4 6-9 हीयते (for क्षी) — d) V1 B2 3 6 Dn गुणान्विता (for °र्जिता)

65 T2 3 G3 4 om. 65 (cf v 1 64) — a) V1 Dn1 n2 D10 T1 G1 सर्वदा, D3 °त (for °था) — b) B1 (marg as in text) 3 4 D4 6-7 9 10 भूमिम् (for भूतिम्) — T1 om (hapl) 65cd — d) D10 श्रियम् (for सुखम्) Dn1 n2 त्वभीप्सुना (for °प्सता) — After 65, G1 3 ins

344* स्वनिर्जिता स्वयक्रीता भृता च वार्पयेन्नृप।

While M ins after 65 G1 3 after 77

345* सुनिर्मिता सुविक्रीता सुभृता वापि यन्नृप।

[M4 सुनिर्जिता (for मिता) G1 3 सुभृता स्वपर्येन्नृप (for the post half)]

66 c) D10 यत्, M4 त (for तत्) T1 समुत्सृजेत्स्वकं पाप

67 a) D1-9 सरित सागरा शैला — b) G2 सागराणि (for काननानि) — c) T2 एव (for एतन्) B1 नर सम्यग्, D1-9 नरश्रेष्ठ (for नर शक्र) — d) D1-8 10 ददन् (for ददत्)

68 B1 D3 9 T3 G4 om (hapl) 68-69 D1 2 om (hapl) 68 — a) G1 2 M तटा(G1 2 डा)कानि (for तडागानि) T1 2 तटा(T1 °डा)कान्युपपानानि.

स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ६८
ओषधीः क्षीरसंपन्ना नगान्पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददत् ॥ ६९
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ ७०
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥ ७१
न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ।
स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ॥ ७२
आहिताग्निं सदायज्ञं कृशभृत्यं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ ७३
ब्राह्मणेष्वृणभूतं स्यात्पार्थिवस्य पुरंदर ।
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ॥ ७४
नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणाय सुरश्रेष्ठ कृशभृत्याय कश्चन ॥ ७५
अथाश्रु पतितं तेषां दीनानामवसीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ॥ ७६
भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः ।
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ॥ ७७
इक्षुभिः संततां भूमिं यवगोधूमसंकुलाम् ।

— b) D4–7 स्रोतांसि सरितोपि च (D5 6 वा) — c) T1 स्नेह, T2 G1 स्नेहात् (for स्नेहान्) — d) D5–7 10 ददन् (for ददत्)

69 B1 D? 9 T3 G4 om 69 (cf. v l 68) B4 om (hapl) 69 — a) T1 G3 M4 ओषधीं V1 B2 5 Dn D8 10 वीर्य (for क्षीर) B8 औषधान्वीर्यसपन्नान् — b) D4 6 7 समन्वितान् (for फला°) — c) T1 पद्मकोरपलशैलांश्च, T2 G2 8 M कनकोप(G2 °रुप)लशै° — d) D –7 10 ददन्

70 b) B1 वा (for च) D10 यज्ञैरिष्ट्वाप्तदक्षिणै — c) T G उपाश्नाति (for अवाप्नोति) — d) D1–8 आप्नुते (for अश्नुते)

71 a) D5 दानाद् (for दाता) D1 8 गृह्णति — c) T3 G1 पूर्वं (for पूर्व-) D10 हरेद् (for हरन्) — d) M1–8 [ए]व (for [उ]प)

72 b) V1 B5 Dn8 चापि हरेत्, B1 D5 7–10 चाहरते, B2 [अ]पि ह°, B8 T1 च ह°, B4 D4 6 तु ह°, Dn1 n2 [अ]पि च हरेत् (for वा हरते) B4 D2 4 6 च (for तु) — c) D1 2 तौ विद्धौ, D8 नाविद्धौ (for स बद्धो) B1 G2 दारुणै (for वा°) — d) D1 8 तप्येते; D5 नियतो (for तप्यते)

73 T1 om 73–74 — a) B8 आहुताग्निं (for आहि°) D4 आदित्याग्निं महायज्ञ — b) T2 कृश (for कृश) V1 B Dn D? 2 10 G4 -वृत्तिं, D1 -कृत्य, D8 -भूतिं, T8 मृत्युं (for -भृत्य) D4 प्रियातिथि — c) V1 B Dn भजति; D1 2 तरति, T8 G2 हरति (for भरन्ति) D6 द्विजं (for द्विज) G1 8 ये हरति सुरश्रेष्ठ· — d) D2 ये, D3 om (for ते) G2 यर्धं (for यमम्) D6 नोपसर्पति तान्यम

74 T1 om 74 (of v l 73) — a) V1 B Dn D3, 10 ब्राह्मणेष्व(D10 °प्य)नृणीभूत (D8 °त्वा) — b) V1 B Dn D10 पार्थिव स्यात् (for °वस्य) — d) T? 8 G2 8 भृश (for कृश) D2 दुर्कमान् (for -दुर्बलान्) G4 तारयेद्बलदुर्बलं

75 D5 om 75 — a) Dn8 M1 नाच्छिद्यात्; D4 9 नोच्छिंद्यात् T8 स्पृशता (for स्पर्शिता) T1 द्विजाय स्पर्शिता भूमिर् — T2 om (hapl) 75b–78a — b) T1 नरेण (for प°) — c) V1 B Dn D10 ब्राह्मणस्य, T1 आक्षिप्ता स्यात् (for ब्राह्मणाय) — d) T1 धीमते (for कश्चन) V1 कृशवृत्ते कदाचन

76 T2 om 76 (of v l 75) — a) V1 B1 Dn1 n2 D10 यथा, B2–5 Dn8 यद्, M8 तथा (for अथ) M4 अथ श्रुत्वा गृहं तेषां (sic) — b) V1 B Dn D2 8 T1 G1 अथ (for अव-) — c) D4 6–9 दत्ते (for क्षेत्रे)

77 T2 om 77 (of v l 75) M8 om 77 — a) D1–9 राज्याद्, G8 राष्ट्र (for राष्ट्राद्) — b) V1 B6 Dn नर, D1–8 पथि (for पुन) — d) B4 लोके (for -पृष्ठे) D5 T1 8 G M1, 2 4 विधीयते (for मही°) — After 77, G1 8 ins 345*, while M1 2 4 ins after 77

346* हृते क्षेत्रे दरिद्राणामश्रुपात सुदारुण ।
इष्टापूर्तं नरस्यास्य हन्यात्त्रिपुरुष कुलम् ।
[cf 76]

78 T2 om 78a (of v l 75) — a) Dn2 D8 10 सवृता, G1 8 सहितां, M8 4 सततां (for सतता) G4

गोश्ववाहनसंपूर्णां बाहुवीर्यसमार्जिताम् ॥ ७८
निधिगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयाँल्लभते लोकान्भूमिसत्रं हि तस्य तत् ॥ ७९
विधूय कलुषं सर्वं विरजाः संमतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुंधराम् ॥ ८०
यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्ये सस्ये विसर्पति ॥ ८१
ये रणाग्रे महीपालाः शूराः समितिशोभनाः ।
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ॥ ८२

नृत्यगीतपरा नार्यो दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं दिवि ॥ ८३
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥ ८४
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं नरम् ॥ ८५
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ।
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ॥ ८६
आज्ञा सदाप्रतिहता जयशब्दो भवत्यथ ।

C. 13 3192
B 13 62 90
K. 13 97 93
M 13 52. 86

ऋषिभि सतत भूमिं — $^{b}$) V1 B Dn D10 -शालिनीं, D1 8 T G -शाद्वला, D5 7 शाद्वलीं, D8 9 -शाद्वला (for सकुलाम्) — After 78$^{ab}$, M1-3 ins

347* कदलीवनमाम्राद्यैः सुपूर्णां स्पर्शयेन्महीम् ।

— $^{c}$) D6-9 काष्ठ, T1 2 G2-4 गोष्ठ, M गोष्ठैर् (M4 °ष्ठे) (for गोश्व) V1 B1 5 Dn D1 - पूर्णां वा, D10 सकीर्णां (for -सपूर्णां) — $^{d}$) D3 समार्जिता, D7 -समन्विता (for समार्जिताम्) V1 बाहुवीर्यात्प्रपालिता, B Dn D10 °र्याद्युपार्जिता, S यो ददाति वसुधरा — After 78, S ins

348* विमुक्त सर्वपापेभ्य स्वर्गलोके महीयते ।

79 $^{a}$) D8-9 ददन् (for ददद्) — $^{c}$) M8 अक्ष ताल्ँ (for °याल्ँ)

80 T1 om 80 — $^{a}$) T2 G2 कल्मष (for कलुष) — $^{b}$) D3 निरजा (for वि°) G1 M3 स (for सं) — $^{c}$) D5 om from सद्भि up to दान (in 81$^{c}$)

81 D5 om up to दान (in 81$^{c}$) (cf. v 1 80) — $^{a}$) T1 पातित — $^{b}$) D1 7-9 स्नेह (for तैल) Dn3 विसर्पते (for °ति) D1-4 स्नेहबिंदु प्रसर्पति — M1 om (hapl) 81$^{cd}$ — $^{d}$) G1 सत्रे सत्रे (for सस्ये सस्ये) V1 B5 Dn1 n2 D1-6 8 9 T1 वि(D2 4 प्र) वर्धते (for विसर्पति)

82 $^{a}$) D1-9 ये रणाग्रेषु भूपाला — $^{b}$) D- -शोभिन (for -शोभना) — $^{c}$) D1 2 प्र (for ऽभि) D3 शूरा (for शक्र)

83 $^{a}$) D1 S (except T1) नृत्त (for नृत्य) D2 6 7 8 धरा (for परा) — $^{b}$) D5 -विभूषणा (for °षिता) — D1 T8 G2 4 M8 om (hapl) 83$^{c}$-85$^{b}$

— $^{c}$) B1 विप्रेंद्र, D10 पुष्पाणि (for देवेन्द्र) — $^{d}$) V1 B Dn तथा (for सदा) D2-10 नर (for दिवि) T1 2 G1 2 M1 2 4 ब्रह्मलोके धराप्रद

84 D1 T8 G2 4 M8 om 84 (cf v 1 83) T1 om 84-85 — $^{a}$) D6-9 स (for च) — $^{c}$) D3 कृत्स्ना (for सम्यग्)

85 D1 T8 G2 4 M8 om 85$^{ab}$ (cf v 1 83) T1 om 85 (cf v 1 84) — $^{a}$) D2-10 T2 अप्सरसा — $^{b}$) D1-4, 6-9 विभूषित D5 दिव्यमालाविभूषित — $^{c}$) V1 D2 6-9 10 तिष्ठति B1 विप्रेंद्र (for देवेन्द्र) — After 85$^{c}$, N ins

349* ब्रह्मलोके धराप्रदम् ।
उपतिष्ठन्ति भूतानि

[(L 1) Cf 83$^{d}$ D3 लोक D1 6-9 प्रदान् (for °प्रदम्) — D5 om line 2 — (L 2) V1 B1 5 Dn1 n2 D1 6-9 पुष्पाणि, Dn3 पुण्यानि (for भूतानि)]

— $^{d}$) M4 भूमिदान (for सदा भूमि) T2 3 G M दिवि (for नरम्)

86 $^{a}$) D1 2 4 6-10 शस्त्रो (for शङ्खं) G2 चित्र (for छत्रं) D8 शस्त्रो वरासन छत्र, D5 सस्यो ब्रह्मासने छत्र (810) — $^{b}$) Dn1 G2 वराश्व (for °श्वा) B5 Dn1 n2 -वाहन, D2 4 वारणान् (for °णा) — D1 6 7 9 om (hapl) 86$^{c}$-87$^{b}$ — $^{c}$) D1-3 5 8 10 दानस्य, S प्रदान (G2 नि, M °न) (for प्रदानात्) — $^{d}$) B8 M8 निचयस्, B1 निलयस् (for निचयास्) T2 G2 तदा, G1 सदा (for तथा)

87 D1 6 7 9 om 87$^{ab}$ (cf v 1 86) — $^{b}$) T1 [ऊ]त (for [त्य]थ) V1 B Dn D3 10 जयशब्दा च(Dn1 °ब्दव, D8 10 °ब्दो च)सुनि च, D2 °ब्दा भवत्यथ

भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरंदर ॥ ८७
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाड्वलाः ।
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ८८
नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥ ८९
एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥ ९०
य इमं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ ९१
अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विप्रो भुञ्जतः श्रावयेद्द्विजान् ॥ ९२
इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ ।
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ॥ ९३

इति श्रीमहाभारते अनुशासनपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## ६२

युधिष्ठिर उवाच ।
कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ १
केन तुष्यन्ति ते सद्यस्तुष्टाः किं प्रदिशन्त्युत ।

---

— c) V1 B Dn1 n2 D3 5 10 G3 पुण्यानि, T1 सर्वस्य (for पुष्पाणि) — d) D2 मूल (for फल) D3 फल प्रद (for पुरदर)

88 T1 om 88 — a) T2 3 G3 पुष्पाणि (for °श्च) — b) T2 3 G2-4 M बृहत्काचन (for कुशकाञ्चन) V1 B Dn D1-3 7-9 -शाद्वला, M1-3 शाड्वला — c) D3 प्रस्रवां, T2 3 G1 3 4 M -प्रभवा (for प्रसवा) — d) M1 3 4 आप्नोति (for प्रा°) D7-9 T2 G1 3 ददन् (for ददत्)

89 b) D1-4 8 9 T1 G4 राज, D5 राज्ञा, D7 T3 -भूमि, T2 मत्र (for मातृ) — c) D10 सत्यात्परो (for सत्यसमो) G4 मत्रो (for धर्मो) — d) M न दानसदृशो निधि

90 Before 90, B1-4 Dn3 T2 3 G1 3 4 ins भीष्म — a) T2 G1 3 4 आगीरसाच् — b) D1 2 वसुधाधिप, D3 °धां नृप (for °मिमाम्) — c) B3 बहु (for वसु) D4 6-9 समायुक्ता (for °कीर्णां) — d) T2 G1 3 4 [आं]गीरसे

91 a) V1 B1 3-5 Dn1 n2 D1-10 T1 G1 3 M2 4 य इद, D8 इम य (by transp) — b) V1 B Dn D10 सभव (for सस्तवम्) — c) G1 M2 3 भोगो (for भागो) D5 न तस्य क्षीणो भोगस्तु — d) T1 च विद्यते (for भवत्युत) D5 सुराणा वल्लभो भवेत्

92 a) D3 T G4 अक्षय्यं — b) D1 6-9 पितॄणां (for पितृभ्यस्) D10 तु (for तन्) — c) D5 श्राद्धे तु (for श्राद्धेषु) V1 B2-5 Dn D15 विद्वान्, D1-3 विप्रान् (for विप्रो) — d) M भुजानान् (for भुञ्जत) D6 7 9 पितॄन् (for द्विजान्)

93 a) D1 अथ (for सर्व) G3 -देवाना, M4 -भूताना (for दानाना) — b) B3 तदा (for तव) — c) D5 यथा भारतशार्दूल

Colophon — *Parvan name* B1 3 4 Dn3 D1 2 शांति — *Sub-parvan* V1 B Dn D1 2 6-10 M2 3 दानधर्म — *Adhy name* V1 B2 Dn इंद्रबृहस्पतिसंवाद, B1-3 D10 बृहस्पतींद्रसंवाद, B3 भूमिदाने बृहस्पतींद्रसंवाद, D1-3 5-7 T3 G3 4 M भूमिदानप्रशसा, D4 दानप्रशंसा: D8 9 भूमिप्रशसा T2 दानप्रशसायां बृहस्पति पुरदरसवादे भूदानमाहात्म्यकथन — *Adhy no* (figures, words or both) V1 62, D5 57, D10 67, T1 M 90, T2 3 G2 4 97, G1 96, G3 91 — *Śloka no* D4 92

### 62

1 c) D4 पुण्याधिकेभ्यो विप्रेभ्यो

2 b) V1 B3 Dn transp तुष्टा and किं D8-9 प्रदद(D8 9 °द)ति (for प्रदिशन्ति) V1 B Dn D1-7 10

गंम मे तन्महाबाहो फलं पुण्यकृतं महत् ॥ २
दत्तं किं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ३

भीष्म उवाच ।

इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतः शृणु भारत ॥ ४

नारद उवाच ।

अन्नमेव प्रशंसन्ति देवाः सर्षिगणाः पुरा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ५
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ६
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ७
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ॥ ८
कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ ९
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ १०
श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन्गृहस्थो गृहमागतम् ॥ ११
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।

C. 13 3211
B. 13 63 12
K. 13 98 12
M. 13 53 12

---

च (for [ज्ञे]न) — M transp 2[cd] and 3[ab] — [c]) Dn1 (marg. as in text) G1 M1 सर्वमेतन्न (for ज्ञं मे तन्) T G1-2 सर्वमेतन्महाबाहो — [d]) M पुण्यतम (for °कृत)

3 T1 om 3[ab] M transp 2[cd] and 3[ab] — [a]) B1 दत्तं किं फलमालोकि — [c]) T2 3 G2 4 भगवन् (for भवत) — [d]) D1-3 5 विस्तरेण (for °रतो)

4 [a]) B3 इम सर्वं, B1 इदं सर्वं, D इममर्थं (for इम°) — [b], T1 2 दिव्य (for देव) — [c]) V1 B Dn D10 नारद (for तन्मे) — [d]) T1 G. M1-3 यज्ञत (for त) D3 पार्थिव (for भारत) V1 B Dn D10 तन्मे निगदत शृणु

5 G. om the ref 5[ab] = (var) 14, App I (No 4) line 2174 — [b]) D1 ऋषि (for सर्षि) B1 4 D10 T1 तथा, D सुरा, G1 तदा, M सदा (for पुरा) V1 B1 . 5 Dn देवा ऋषिगणास्तथा — [c]) D2 T1 च (for हि) V1 Dn1 n2 D1-4 सजाः (for य)

6 D om (hapl) 6-7 6[ab] = 14, App I (No 4) line 2175 — [a]) B1 दान (for दानं) — [d]) B1. 2 4 सर्वे ति (for इच्छन्ति)

7 D. om 7 (cf v 1 6) 7[a] = (var) 14, App I (No 4) line 2176 — [a]) Dn1 D1 c-5 ऊर्जस्कर (for °स्कर) — [b]) T2 3 प्राणाश्चान्ने प्रतिष्ठित — 7[cd] = (var) 14, App I (No 4) line 2267 — [cd]) M1-3 अन्ने न (for अन्नेन) T2 3 G2 4 साध्यते (for धार्यते) D10 G2 transp सर्वं and विश्व D3 इत, (also उत) (for इद) B1 G1 विभो (for प्रभो) D1-3 सर्वे D1 om सर्वं ,अन्ने प्रतिष्ठित (for 7[d])

8 [a]) G1 2 4 गृहस्थो (for °स्था) — [b]) M हि (for च) V1 B Dn D10 भिक्षवस्तापसास्तथा (B3 °था) — 8[cd] = (var) 14, App I (No 4) line 2268 — [c]) V1 B1 2 4 5 Dn D10 अन्नाद्भवति वै प्राणा, T1 अन्नात्प्राण प्रभवति — [d]) T1 प्रत्यह (for °क्ष)

9 = (var) 14, App I (No 4) lines 2269-70 — [a]) Some MSS कुटुम्ब V1 B Dn D10 तु (for [अ]पि) Bom ed and Kumbh ed कुटुम्बिने सीदते च — [d]) G1 गतिम् (for भूतिम्)

10 [a]) D5 -भूताय (for रूपाय) — [b]) Dn2 S (except G1) यद Dn3 T G2 यो द)दाति (for यो दद्याद्) — [c]) Dn3 D1 4 c-9 T2 3 G 4 M1 निधि (for निधिं) — [d]) D1 3 T2 पारलौकिकम् T2 अत्र न (for आत्मन)

11 = (var) 14, App I (No 4) lines 2271-72 — [a]) D. श्रान्तम् (for श्रान्तम्) — [b]) D2 अर्हम्, D1 c 7 9 गृहम्, G1 3 क्षतम् (for अर्हम्) T1 गृहस्थो गृहमागत — [c]) T2 भूमिम् (for भूतिम्) B2 इच्छन्वै (for अन्विच्छन्) — D1 om 11[d]-12[b] — [d]) D1 आगमत् (for °तम्) T1 प्रियातिथिमुपस्थित

12 D1 om 12[ab] (cf v 1. 11) T1 om 12 12[ab] = 14, App I (No 4) line 2273 — [a]) T2 भित्त्वा

